# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PAṆḌITS OF THE BENARES SANSKṚIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.,

LATE DIRECTOR OF PUBLIC INSTRUCTION, N. W. P. & OUDH,

& G. THIBAUT PH. DR.,

PRINCIPAL, BENARES COLLEGE.

*Nos. 13 & 22.*

---

# परिभाषावृत्तिः ।

अर्थात्

परिभाषेन्दुशेखरादिव्याकरणपरिभाषाविषयग्रन्थानां मूल-
भूतो ग्रन्थविशेषः ।

महामहोपाध्यायश्रीसीरदेवविरचितः ।

# PARIBHÁSHÁVṚITTI

A TREATISE ON SANSKṚIT GRAMMAR

BY S̱ÍRADEVA.

EDITED BY PAṆḌIT HARINÁTHA DUBE

PROFESSOR IN THE BENARES SANSKṚIT COLLEGE.

---

*BENARES:*

**PUBLISHED BY MESSRS. BRAJ B. DAS & CO.**

PRINTED AT THE BENARES PRINTING PRESS

BY CHHANNULAL.

1887.

# श्रीः

## श्रीसीरदेवकृतपरिभाषावृत्तेरुदाहारः ।

शिवदेव्यास्तपोमूर्त्तेर्मातुः पादाब्जजन्मनः ।
पितुः श्रीविश्वनाथस्य कणामँह्यादरान् मुहुः ॥ १ ॥

यत्पादपङ्कजनखद्युतिमेव वेदाः
सच्चित्सुखात्मकतयाऽखिलवस्तुसत्त्वे ।
मूलं वदन्ति भजतां निजरूपदां तां
वाग्देवतां स्वतनुवाग्मनसैर्नमामि ॥ २ ॥

अथ सर्वभूतानुभवकमनीयपरमसुखास्वादनैकहेतुज्ञाने साक्षा-
त्परम्परया वा हेतुभावमुद्वहमानानां चतुर्दशानामपि विद्यानां प्रा-
चीनतरसकलभाषामूलभूतसंस्कृतभाषायामेवोपनिबद्धतया प्रागुक्त-
निखिलविद्याविषयान् साकल्येनावजिगमिषूणां संस्कृतभाषाज्ञान-
मावश्यकमाकलयन् सम्भावयंश्चाननुगतानन्तानन्तपदतदर्थानां प्रा-
तिस्विकरूपेण प्रदर्शनेऽल्पीयःकालजीवनाद्यतनाल्पबुद्धिजीववर्गदुर्ज्ञे-
यत्वमूलकतदनुपायत्वम्, परमकारुणिकः सकलजीववर्गानज्ञानान्ध-
तमसाज् ज्ञानप्रदीपप्रकाशनेनोद्दिधीर्षुर्मुनिपदान्वर्थतासम्पादकचर-
णकमलोऽतीन्द्रियज्ञानविशारदः पाणिनिर्निखिलपदतदर्थाननुग-
गमय्यातिसंक्षिप्तेन प्रत्येकं पादचतुष्टयमनोहरैरष्टभिरध्यायैरुपनि-
बद्धेन व्याकरणसूत्रपाठाभिधप्रधानवेदाङ्गेनावाबूबुधत् । तदनु तमि-
मं ग्रन्थमतिसंक्षिप्ततयाऽद्यतनमन्दबुद्ध्यनधिगम्यं स्वीययोगबलेना-
कलय्य ततोऽपि करुणाभरनिभृतभावनो भगवान् भाष्यकारः पत-
ञ्जलिः सहजप्राञ्जलैर्वाक्यैर्व्याख्यत्, यत्रातिष्ठिपच्चानेकयुक्तिभिः प्रा-
चीनाभियुक्तोक्तवचनकदम्बैश्च तत्तत्सूत्रार्थनिर्णयैकसाध्यतत्तत्सूत्रविप-

यपरिशोधनद्वारा। अथ ततोऽपि महाभाष्यनाम्ना सुप्रसिद्धाद्विस्तृ-
ताद् ग्रन्थात्सिद्धान्तासिद्धान्तावलोकनव्यामूढचेतनानां सूत्रार्थं नि-
र्णिनीषतां मनोरथावाप्तिर्बह्वायाससाध्यतां विनिश्चित्य लौकिकशा-
स्त्रीययुक्त्युपबृंहितप्राचीनाभियुक्तप्रसिद्धपरिभाषाः सञ्चिचीषुस्तासा-
मर्थमुदाहरणं प्रत्युदाहरणं मूलं विषयं बाधहेतुविषयादिकं च प्र-
दिदर्शयिषुः परमदयालुः श्रीमान् महामहोपाध्यायः श्रीसीरदेवो
नातिविस्तृतमपि विस्तृतार्थगर्भं परिभाषावृत्तिनामकं ग्रन्थं महता-
ऽऽयासेन समचकलत्। स चायं ग्रन्थः सम्प्रति प्रचलितपरिभाषा-
विषयादिनिर्णायकपरिभाषेन्दुशेखरादिग्रन्थानां मूलभूतोऽपि का-
लक्रमेण पुस्तकलेखनसंशोधनादेरायाससम्पादनीयतया क्व चित् क्व
चिदेव पुस्तकरूपेणावतिष्ठते। मन्ये चैतस्य ग्रन्थस्य प्रचारः परिभा-
षेन्दुशेखरादिभ्योऽप्यधिकज्ञानसम्पादकतया व्याकरणपठनपाठनर-
सिकजनानामभूतपूर्वमानन्दमवश्यमुपजनयिष्यतीति प्राचीनप्रामा-
णिकबहुजनोपयुक्तविरलतरप्रचारग्रन्थपरिशीलनाऽसाधारणरसिकैः
प्राचीनग्रन्थप्रचारबुभुत्सुचित्तैः काशीस्थराजकीयप्रधानपाठालयाध्यक्ष-
प्रधानैर्डाक्तरथिबोसाहबमहाशयैर्लब्धाद्यस्तत्पाठालयव्याकरणप्रधा-
नाध्यापकवरपितामहचरणसुधीवरश्रीद्विवेदिदत्तशर्मसंगृहीतमेकमेव
पुस्तकमुपलभमानोऽपि यथाबुद्धि संस्कृत्य शीरीज्नामके पत्रे प्रका-
शयितुमीहे, आशासे चानेन श्रमेण सर्वान्तर्यामी बोधस्वरूपः परा-
त्मा प्रसीदतु, संप्रार्थये च सुधीगणानच्युतबुद्धीनत्यमदीयां च्युतिमु-
पलभ्याप्यमत्सरस्वीयबुद्ध्या विशोध्य सफलयन्तु शुभदृष्टिपातेनास्म-
दीयमुद्योगमिति॥

काशिस्थराजकीयप्रधानपाठालयाध्यापकः
श्रीद्विवेदिहरिनाथमनीषी।

सं० १९४४ अक्षयतृतीया।

# परिभाषावृत्तेः।

## प्रथमाध्यायस्य प्रथमः पादः।

श्रीगणेशाय नमः।

स्फुरदभिनवरागा भास्कराभा प्रगल्भा (१)
प्रसभशमितदोषा स्फीतसल्लोकचक्रा (२)।
विहितहितविचारा जाड्यजातोपशान्त्यै
प्रभवतु (३) परिभाषावृत्तिराशेवितैषा ॥ १ ॥

व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् (४) ॥ १ ॥

व्याख्यानादाचार्यपारम्पर्योपदेशात्सन्देहेऽपि विशेषावगमो भवति न तु लक्षणाभाव इति। तेन षष्ठी स्थानेयोगेत्यस्य प्रत्याख्याने षष्ठीनिर्देशेष्वनेकसंबन्धसंभवेऽपि स्थानेयोगैव भवति। तदुक्तं "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति स्थानेयोगेति व्याख्यास्याम" इति॥

तथा चत्वार्यणग्रहणानि पूर्वेण णकारेण। अणुदित्सवर्णस्य चाप्रत्यय [१, १, ६९] इत्येकं परेण। इणग्रहणानि तु परेणै-

---

(१) ज्ञानप्रकाशसंपादनेन जीवान् प्रगल्भयतीत्यर्थः ॥

(२) सुजनवृन्दाह्लादसंपादिकेत्यर्थः ॥

(३) समर्था भवत्वित्याशीर्वादात्मकं मङ्गलं निरूक्तम् ॥

(४) इयं परिभाषा प्रथमाध्यायस्थप्रथमपादान्तर्गतद्वितीयाह्निके लण्सूत्रे भाष्ये द्रष्टव्या। परिभाषेन्दुशेखरे तु सर्वपरिभाषाणामेतदर्थभूतत्वाद् ग्रन्थादावेव निरूपिता ॥

वेति ॥ अत्र युक्तयोऽपि यथासंभवमभिधीयन्ते । तत्र केऽणः [७, ४, १३] ढ्रलोपे पूर्वस्य दीर्घोऽणः [६, ३, १११] इत्यत्राणग्रहणसामर्थ्यादवसीयते पूर्वेणेति । यदि परेण स्यात् । अचामेव ह्रस्वदीर्घाभ्यां भाव्यम् । एतच्चाचश्च [१, २, २८] इति परिभाषयैव सिद्धं तत्किमणग्रहणेनेति । सैषा युक्तिः शक्यते व्यभिचारयितुम् । अचश्चेत्येवं सिद्धयोर्ह्रस्वदीर्घयोर्यदणग्रहणं करोति तस्यैतत्प्रयोजनमनचोऽप्यणो दीर्घह्रस्वौ यथा स्याताम् अगीष्कः अधूष्कः श्लिङ्कः मधुलिङ्कः वढो वढुमिति । एवं च हणित्यत्र यस्मात्सकृतोक्तं के परे हलामणामसंभवादित्यादि, तथा दीर्घश्रुत्याऽचश्चेति संनिधापितेऽच एव दीर्घत्वेन भवितव्यमित्यादि तच्चिन्त्यम् । अत्र केचिच्चिन्तयन्ति । अगीष्क इत्यादौ विसर्जनीयादिषु कृतेषु हकारोऽण् रेफस्य नास्ति । न चास्यसिद्धत्वम् । न मुने [८, २, ३] इति योगविभागेन निषिद्धत्वात् । अनभिधानं तु न वक्तव्यम् । रोः सुपि [८, ३, १६] इत्यत्रागीष्कादीनां न्यासे व्याख्यातत्वात् ॥ दीर्घविधौ च वढो वढुमित्यादौ परेण णकारेण प्रत्याहारग्रहणादनचोऽपि रेफस्य यद्दीर्घत्वमुक्तम् । तन्न । यद्येतत्प्रयोजनं स्यात् तदा हयवरटष्टकारेण प्रत्याहारं कुर्यात् । ढ्रलोपे पूर्वस्य दीर्घोऽट इति । अथ वाऽस्तु वढो वढुमित्यादौ दीर्घ एव ऋकारः तथापि कृते तस्मिन्नाङ्गुण [६, १, ८७] इत्यकारऋकारयोर्गुणेनाकारे रपरत्वे च कृते तदेव रूपं वढो वढुमिति । अतोऽचश्च [१, २, २८] इति सिद्धे यदणग्रहणं तत्पूर्वेण णकारेण प्रत्याहारार्थम् । न च परेण णकारेण प्रत्याहारग्रहणे रेफस्य दीर्घवैयर्थ्यात्पुनराङ्गुण-

बाधः कल्पनीयः । एवं हि सामर्थ्यद्वयं स्यात् । सवर्णविधौ परेण णकारेण प्रत्याहारग्रहणे उरृत् [७, ४, ७] इति तपरकरणं ज्ञापकम् । यदि तत्रापि पूर्वेण स्यात् एवं च सूत्रोपात्तस्य मात्रिकस्य स्थाने सूत्रोपात्ते ऋकारे विधीयमाने सावर्ण्याभावाद् द्विमात्रिकस्य प्राप्तिरेव नास्तीति तपरकरणमनर्थकं स्यात्। यच्च ऌणित्यत्र न्यासकृतोक्तं दीर्घस्यापि स्थानिनो यथाश्रुतेन ह्रस्वेनैव भवितव्यमिति तपरकरणमनर्थकं स्याद् व्यावर्त्याभावादिति । तत्र द्विमात्रिकस्य स्थानित्वं यदुक्तम् । तदसङ्गतम् । आदेशवत्स्थानिनोऽपि द्विमात्रस्याभावात् (१) । अथ जातौ (२) द्विमात्रस्य स्थानित्वमिति चेन्न । एवमादेशेऽपि द्विमात्रत्वप्रसङ्गः । अथ स्थानिनं प्रति जातिरादेशं प्रति व्यक्तिरेतत्तु न हृदयगाहि । एवं तर्हि ऋकारऌकारयोः समाहारद्वन्द्वैकत्वेन नपुंसकह्रस्वत्वेन च उरृदिति निर्देशे दीर्घस्यापि स्थानित्वम् । नुमभावस्त्वागमशासनस्यानित्यत्वात् । इदमथ युक्तम् । व्यक्तिरेकेऽण्प्रत्याहारे ऌकारस्यानन्तर्भावात् सावर्ण्येन ऋकारेण ऌकारस्याग्रहणादृकारस्याच्त्वं नास्ति । अतोऽचो ह्रस्वत्वं विधीयमानमृकारस्य कथं स्यात् । उच्यते । ह्रस्वो नपुंसके प्रातिपदिकस्य [१, २, ४७] इत्यनेनाचो ह्रस्वत्वं विधीयते । अच्प्रत्याहारे च ऋकारोऽस्ति तत्र ऋकारेण ऋत्वजातेराश्रयणाद् द्विमात्रिकस्यापि ऌकारस्य ह्रस्वत्वेन भाव्यमेवेति युक्तं दीर्घस्यापि स्थानिन इत्यादि ॥

---

(१) प्रकृतसूत्रेऽग्रहणादिति भावः ।

(२) मीमांसकरीत्या शब्दवाच्यत्वेन सिद्धान्तितायामिति शेषः ।

इयं च परिभाषा ञ्णित्यत्र भाष्यकारेण ज्ञापिता। तदुक्तम्। "किं पुनरयं वर्णोत्सन्ताविव णकारस्सन्देहहेतुरनुबद्धोऽपि पुनरनुबध्यते यस्मादनेनाण्ग्रहणेष्विण्ग्रहणेषु च संदेहः किं पूर्वेण परेण वेति एवं तर्हि ज्ञापयत्याचार्यो भवत्येषा परिभाषा व्याख्यानत इत्यादि॥

(१) अथ कथं विशेषप्रतिपत्तिरित्यत्र षष्ठीसमासः। यावता कर्मणि च [२, २, १४] इत्यनेन प्रतिषेधेन भाव्यम्। न च क्तोगलक्षणा षष्ठी समस्यत * इत्यनेन समासः शक्यते कर्त्तुम्। तद्विषये एव कर्मणि चेत्यस्यारम्भात्। उच्यते। कर्मणि चेत्यनेनोभयप्राप्तौ कर्मणि [२, ३, ६६] इत्यनेन नियमेन या षष्ठी तस्या एव समासप्रतिषेधो विज्ञायते। अत्र चार्थे कर्त्तरि च [२, २, १६] इति सूत्रं प्रमाणम्। अन्यथा अपां स्रष्टा ओदनस्य भोजक इत्यादौ कर्मणि चेत्यनेनैव प्रतिषेधस्य सिद्धत्वात् कर्त्तरि चेत्यनर्थकं स्यात्। न च प्रैष्यस्य कारयिता प्रैष्यस्य कारयिता इत्यत्र हृक्रोरन्यतरस्याम् [१, ४, ५३] इति कर्त्तरि षष्ठीसमासप्रतिषेधार्थमिदमिति। तृजकाभ्यां कर्त्तरि [२, २, १५] इत्यनेनैव तत्सिद्धेः। यत्तु तृजकाभ्यां कर्त्तरीत्यत्र वृत्तावुक्तं तृज्ग्रहणमुत्तरार्थमिति तत्कर्त्तरि चेति सूत्रे स्थित इति। अण्यन्तापेक्षयोक्तमुत्तरार्थमित्येके। उभयप्राप्ताविति नियमेन च षष्ठी षष्ठी हेतुप्रयोगे [२, ३, २६] इत्यतः प्रयोगग्रहणानुवृत्तेयत्र सामर्थ्यप्राप्तं कर्तृकर्मणोरुभयोरुपादानं तत्रैव यथा स्यात्। यथा आश्चर्यो गवां दोहोऽगोपालकेनेति। तथा हा-

(१) अयं विचारः परिभाषे-दुशेखरे नैवास्ति॥

न्नाश्चर्यं प्रतिपाद्यं तच्च दुर्दोहानां गवां कर्मणामशिक्षितस्या-
गोपालकस्य च कर्त्तुः सामर्थ्यप्राप्ते उपादाने षष्ठी भवति ना-
न्यथा। विशेषप्रतिपत्तिरित्यत्र तु शिष्यादेः कर्तुरकिंचित्कर-
त्वान्न सामर्थ्यप्राप्तं कर्त्तुरुपादानम्। एवं च सति अन्तर्द्धौ
येनादर्शनमिच्छति [१, ४, २८] इत्यत्र येनेति तृतीया न युक्ता
कर्त्तृकर्मणोः कृति [२, ३, ६५] इति कर्त्तरि षष्ठीविधानात्।
उच्यते। निर्देशादेव तृतीयेत्यदोषः। अन्यस्त्वाचष्टे। गम्यमाने-
ऽपि कर्मणि उभयप्राप्ताविति नियमो भवत्येव। तथा चान्तर्द्धौ
येनादर्शनमिच्छतीत्यत्र न्यासकृता उभयप्राप्तौ कर्मणि [२, ३,
६६] इत्यत्र रक्षितेन च गम्यमानेऽपि कर्मणि नियमात्षष्ठ्यभा-
वेन अन्तर्द्धौ येनेति निर्देशसिद्धिरुक्ता। किं त्वेवमइउणित्यत्र
तस्य ग्रहणं भवत्येकेनेति तत्र तस्येति कर्त्तरि षष्ठीति न्यासे
यदुक्तं तन्न शोभनम्। तथा ह्यत्रापि गम्यमाने ग्राह्ये कर्मणि
उभयप्राप्ताविति नियमात्षष्ठ्या न भवितव्यम्। एतच्च शब्दानु-
शासने न्यासकृता व्याख्यातम्। यत्तु तत्र स्वमतिमहिमप्राग-
ल्भ्यादनुन्यासकारो व्याजहार। यत्र सामर्थ्यप्राप्तमुभयोरु-
पादानं स उभयप्राप्तौ कर्मणीत्यस्य विषयः। अन्यथा कर्तृक-
र्मणोः कृतीत्यस्य विधेरुभयप्राप्तावित्यादेश्च विषयविभागो न
स्यात्। न चाकर्तृकं कर्मास्तीति न्यायादिति। तदयुक्तम्। पुरां
भेत्ता देवदत्त इत्यादौ अभिहिते कर्तरि नियमाप्रसङ्गात्।
अत्रोच्यते। षष्ठी हेतुप्रयोगे [२, ३, २६,] इत्यतोऽनुवर्त्तमा-
नमपि प्रयोगग्रहणमनङ्गीकृत्य यथा युष्माभिर्गम्यमाने कर्मणि
उभयप्राप्ताविति नियम उच्यते तथाऽस्माभिरप्यनभिहिताधि-

कारमनङ्गीकृत्य विभागाभाव उक्तः । एतच्चायुक्तम् । अका-
कारयोः प्रतिषेधो वक्तव्य * इत्यन्येन यत्र नियमो बाध्यते तत्र
विधेः कृतार्थत्वात् । चिकीर्षारवेरालोकानामिति । तथा कार्यः
कटो देवदत्तस्येत्यत्राभिहिते कर्मणि षष्ठीप्रसङ्गाच्च । उच्यते ।
कर्तृकर्मणोः कृतीत्यस्य विधेरुभयप्राप्तावित्यादेश्च विधेरिति
नैते समानाधिकरणे षष्ठ्यौ किं तर्हि वैयधिकरण्ये । तदयम-
र्थः । कर्तृकर्मणोः कृतीत्यस्य संबन्धी यो विधिः कर्त्तरि च
[२, ३, ६६] इति, तथोभयप्राप्तौ कर्मणीत्यस्य यो विधिः कर्मणि
च [ २, २, १४] इति एतयोर्विषयविभागो न स्यादित्ययमभि-
प्रायः । यदि गम्यमाने ऽपि कर्त्तरि उभयप्राप्ताविति कर्मणि
नियमः स्यात् तदा इध्मव्रश्चन इत्यादावपि करणे ल्युटि कर्मणि
चेति निषेधः स्यात् कर्तृल्युट्यपि इध्मप्रव्रश्चनो देवदत्त इत्य-
त्रापि आत्मना देवदत्तेनेत्यस्य कर्तुर्गम्यमानत्वादुभयप्राप्तिर-
व्याहतैव । एवं च कर्मणि या का चित्षष्ठी तस्या एव सर्वस्याः
कर्मणि चेत्यनेन समासप्रतिषेधे सिद्धे कर्तरि चेत्यनारम्भणीयं
स्यात् । आरब्धं चातो युक्तमुक्तं विषयविभागो न स्यादिति ।
एतच्च न । आत्मनेत्यस्य कर्त्तुर्गम्यमानत्वे प्रमाणाभावात् । एवं
तर्हि पुराम्भेत्ता देवदत्त इत्यादौ यथा कर्त्तुरभिहितत्वान्निय-
मो न भवति तथा शब्दानुशासनमित्यत्रापि कर्तुरप्रयोगात् ।
तच्च यथा कर्त्तृषष्ठीप्राप्त्या विनापि गम्यमाने कर्त्तरि नियम
उच्यते तथाभिहितेऽपि कर्त्तरि नियममुक्त्वा विषयविभाग उ-
क्तः । एवं च विधिनियमवाक्ययोरेव विषयविभागाभावः । एत-
च्चाकाकारयोः प्रयोगे विधेः कृतार्थत्वानाश्रयणेनोच्यते ॥ १ ॥

## न हि कार्यी निमित्तत्वेनाश्रीयते ॥ २ ॥

यत्कार्यभाक् तत्कार्यं प्रति निमित्तं न भवतीत्यर्थः । तेनाध्येता अध्यापकः ग्रथिता ग्रायक इत्यत्र इङ्ग्रीङोर्ङित्वात् क्ङिति च [१, १, ५] इति गुणवृद्धिप्रतिषेधो न भवति । तथाऽरिरिषतीत्यत्र द्विर्वचनेऽचि [१, १, ५९] इति स्थानिवद्भावो न भवति । यदि स्यात् इसो द्विर्वचने कृतेऽरीषतीति स्यात् ॥

ज्ञापकं चात्र दीधीवेवीटाम् [१, १, ६] इत्यत्र ङितोरपि दीधीङ्वेवीङोर्गुणवृद्धिप्रतिषेधार्थमुपादानम् । न च क्ङिति चेत्यनेन इग्लक्षणाया एव वृद्धेः प्रतिषेधः क्रियते, अतोऽलक्षणाया अपि वृद्धेः प्रतिषेधार्थं दीधीवेव्योरुभयोरुपादानं स्यादिति वाच्यम् । इन्धिभवतिभ्यां च [१, २, ६] इत्यत्र भवतिग्रहणेनाजलक्षणाया अपि वृद्धेः प्रतिषेधो भवतीत्यस्यार्थस्य ज्ञापितत्वात् । ननु च भाष्ये वुक्तो नित्यत्वादिन्धेश्छान्दसत्वादिन्धिभवतिभ्यां चेति सूत्रं प्रत्याख्यातं तथा दीधीवेवीटामित्यपि । यदाह दीधीवेव्योर्ग्रहणमनर्थकं अनयोश्छान्दसत्वात् । आदीधेत् आदीधयुरित्यत्र गुणदर्शनाच्च । इटस्चापि ग्रहणमनर्थकं नेड्वशि कृति [७, २, ८] इत्यत इड्ग्रहणानुवृत्तौ आर्द्धधातुकस्येड्वलादेः [७, २, ३५] इत्यत्र यदिड्ग्रहणं तदिटो विकाराभावार्थम् । ततो लघूपधगुणाभावात् सिद्धं कणिता श्वो रणिता श्व इति । न चैवं पिपठीरपाठीदित्यादावपि दीर्घत्वं न स्यादिति वक्तव्यम् । यतः समानजातीयतयाङ्गकार्यमेव व्यावर्त्त्यते । ग्रहीतेत्यत्र तु ग्रहोऽलिटि [७, २, ३७] इ-

त्यादिसूत्रारम्भाद् दीर्घत्वम् । तर्हि पिपठीषि ब्राह्मणकुलानी-त्यत्र सान्तमहतः संयोगस्य [६, ४, १०] इति दीर्घत्वं न स्या-दिति चेन्न । नुमेवात्र नास्ति नुमि कर्त्तव्येऽल्लोपस्य स्थानिव-त्त्वेनाझलन्तत्वात् । न च क्वौ लुप्ते न स्थानिवदित्यस्ति । क्वौ विधिं प्रति न स्थानिवदितीदं वार्त्तिकमिति कैयटेन व्याख्या-तम् । एवं च क्वौ नात्र नुम् अपि तु सर्वनामस्थाने । वामनस्तु क्वौ लुप्त इत्येव मन्यते । तथा च मपर्यन्तस्य [७, २, ९१] इत्यत्र तेन परिगृहणं वर्जनीयार्थमित्युक्तम् । तेन यत्रैव वर्ज-नीयमस्ति तत्रैवादेश इति । तेन युष्मदस्मदोर्णिचि टिलोपः । युष्मयतेः क्विप् ततः स्वादयः अत्र वर्जनीयाभावादादेशा न भवन्ति । न चास्ति णिलोपस्य स्थानिवत्त्वम् । क्वौ लुप्ते न स्थानिवदिति वचनात् । तदेवं स्थितमेतत् । भाष्यमते न क्वि कार्यमित्यस्या लिङ्गं नास्ति । स्थण्डिलाच्छयितरि [४, २, १५] इत्यत्र शयितरीति निर्देशोऽस्या लिङ्गं कुटादिषु कुङ् शब्दे इत्यस्य पाठो वा ॥

अन्ये तु व्याचक्षते । इग्लक्षणावृद्धिप्रतिषेधस्तावत् क्ङित्प्र-त्ययनिमित्तक एव संभवति न तु क्ङिद्धातुनिमित्तकः । अतो मृष्टः मृष्टवान् न्यनुवीत् न्यधुवीत् इत्यादौ क्ङिन्निमित्तकः प्रत्यय एव परतो वृद्धिप्रतिषेधस्तत्साहचर्याद् गुणप्रतिषेधोऽपि भूयते बोभूयते इत्यादौ क्ङिन्निमित्तकः प्रत्यय एव कर्तव्यः । अत एवाध्येता शयितेत्यत्र क्ङिद्धातुनिमित्तकेन प्रतिषेधेन न भवितव्यम् । अरिरिषतीत्यत्रापि द्विर्वचनेचि [१, १, ५९] इत्य-जादेशं प्रति निमित्तभावोऽकार्यित्वेनैव नियतः तदेवमजादे-

शसंबन्धेऽचीत्यस्याकार्यित्वं तस्माद्वचर्याद् द्विर्वचनविधानेऽपि
यद्यकार्यित्वमेवाचीत्यस्य तदा स्थानिवत्त्वं यथा चक्रतुरिति।
अरिरिषतीत्यत्र तु द्वितीयस्यैकाचो द्विर्वचनादिकारस्य द्विर्व-
चनभाक्त्वमिति द्विर्वचनविधानेऽचीत्यस्य कार्यित्वं न पुनरका-
र्यित्वमिति । तस्मात्परिभाषा प्रयोजनाभावान्न स्वीकर्त्तव्या।
युक्तं चैतत्। अन्यथा अस्यां सत्यां प्रोर्णुनविषतीत्यत्र गुणावा-
देशयोः कृतयोर्द्विर्वचनेऽचीति स्थानिवत्त्वं न स्यात्। सन्नन्तस्य
कार्यित्वात् । तथा द्विर्वचनेऽचीत्यत्राचीति किमित्युक्त्वा जे-
घ्रीयते देध्मीयते इति यत्प्रत्युदाहृतं तन्नोपपद्यते ह्यङ्गवैक-
ल्यात् यथैव यङ् अजादिर्न भवति तथा द्विर्वचननिमित्तम-
पीति । तत्र तर्हीदं वक्तव्यम्। कार्यमनुभवन्नेव कार्यो निमि-
त्तत्वेन नाश्रीयते, जेघ्रीयत इत्यत्र कार्यमननुभवन् निमित्त-
त्वेनाश्रीयते । अन्यस्तु नाश्रित एव । तथा हि । अरिरिष-
तीत्यत्र स्थानिवत्त्वेन इसो द्विर्वचनप्रसङ्गादजादेरेव सनः का-
र्यित्वं निमित्तत्वं च। प्रोर्णुनविषतीत्यत्र तु अजादेः सनो नि-
मित्तत्वं कार्यित्वं च धातोर्नुशब्दस्यैव तस्यैव द्विर्वचनविधाना-
त्। अतोऽत्र सनः साक्षात् कार्यित्वं नास्तीति युक्तमेव निमि-
त्तत्वेनाश्रयणमिति । एवमपि शाधीत्यत्र शा हौ [६, ४, ३५]
इत्यस्य शादेशस्य धिभावं प्रति समानाश्रये त्वावसिद्धत्वन्न
स्यादिति । धिभावस्य स्थानिनो हिशब्दस्यानिमित्तत्वेन स-
माननिमित्तत्वाभावात् । तत्र वक्तव्यं प्रायिकमेतत्। व्यव-
शात् क्वचिदाश्रीयते ॥ २ ॥

**इतरेतराश्रयाण्यपि कार्याणि शास्त्रे प्रकल्पन्ते ॥ ३॥**

इतरेतराश्रयाणि कार्याणि विरोधान्न प्रवर्त्तन्त इति न्यायः। यदुक्तमितरेतराश्रयत्वादप्रसिद्धिरिति । तदपवादोऽयमारभ्यते। अपिशब्दः क्वचिदर्थे। तदयमर्थः। क्वचिदितरेतराश्रयाणि प्रवर्त्तन्त इति। यथा वनसिंहयोः परस्पराश्रयापि रक्षा प्रवर्त्तते । तथा शास्त्रे गार्गीय इत्यादौ वृद्धिसंज्ञया भावितस्यापि वृद्धिसंज्ञा प्रक्लृप्तिः । अन्यथा शालाऐतौप्रभृतिषु सावकाशा वृद्धिसंज्ञा इतरेतराश्रयत्वान्न स्यात् ॥

ज्ञापकं चात्र इग्यणः संप्रसारणम् [१, १, ४५] इत्यत्र संप्रसारणेन यणः स्थाने इको भाव्यन्ते। यण्स्थानिकानां चेकां संप्रसारणसंज्ञेति इतरेतराश्रयत्वम्। कथमेतदन्यथा प्रकल्पते। यद्दीतरेतराश्रयत्वं क्वचिन्न स्यादिति। भागवृत्तिकारस्त्वाह। नित्यशब्दानामन्वाख्यानमात्रमिदमिति ततो नेतरेतराश्रयदोषः ॥ यदुक्तं सर्वाणीतरेतराश्रयाणि भाष्ये परिहृतानि सिद्धं तु नित्यशब्दत्वादितीति। अथैतस्मात् यणः स्थाने इग्विधीयते स्थान्यादेशभावस्य पौरुषेयः तत्कुतो नित्यत्वमिति। नैष दोषः। लोके हि इष्टं यष्टेत्यादयो नित्याः तत्र यजेरर्थे इजिर्विशिष्टविषये साधुरित्येतावति पुरुषाश्रयत्वं स्वभावत एव यजेः स्थाने इजिसिद्धिः ॥ ३ ॥

**आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ४ ॥**

आद्यन्तौ टकितौ [१, १, ४६] इत्यत्राद्यन्तशब्दयोरवयववचनत्वात् टित्कितोरागमयोराद्यन्तावयवत्वमतिदिष्टं मिदचो-

ऽन्त्यात्पर [१, १, ४७] इत्यत्रापि अन्तग्रहणानुवृत्त्या मितोऽप्य-न्तावयवत्वम् । अवयवाश्चावयविग्रहणेन गृह्यन्ते इत्युक्तमतः सिद्धेयं परिभाषा आगमास्तद्गुणीभूता इति ॥

सुखप्रतिपत्त्यर्थं च ज्ञापकमपि केचिदाहुः । णेरनिटि [६, ४, ५१] इत्यत्रानिटीति प्रतिषेधः । यद्यागमिग्रहणेनागमो न गृ-ह्येत तदा कारयितव्यमित्यादौ इटा व्यवहितत्वादेव णिलोपो न प्राप्नोतीति किमनिटीत्यनेनेति ज्ञापकम् । तेन सर्वेषामि-त्यत्र सुटः सुब्ग्रहणेन ग्रहणाज्झल्त्वादौ सुपि एत्वं सिद्ध्यति ॥

ननु अस्यां सत्यां चिच्छिदतुः चिच्छिदुः इत्यादौ हलादिः शेषेण तुको निवृत्तिः प्राप्नोति । उच्यते । हलादिः शेष [७, ४, ६०] इत्यत्राटतुराटुरित्यादिसिद्ध्यर्थं जातिपक्ष आश्रितः । तत्रचैकमेवेदं लक्षणं सकृदेव पपाठेत्यादौ अनादेर्हलो निवृ-त्तिं करोति । तदेवं चिच्छिदतुरित्यादौ हलादिः शेषानन्तरं यस्तुक् तस्य निवृत्तिर्न प्राप्नोति । लक्षणाभावात् । अवश्यं चैतत् । अन्यथाऽजादेर्द्वितीयस्येत्यत्र भाष्यकारेण च मैत्रेयेण च यदु-दाहृतम् । ओणेर्वाणिपतीति स्यादिति सावकाशमेव द्वि-तीयद्विर्वचनमिति । तदसङ्गतं स्यात् । हलादिः शेषेण वकार-लोपप्रसङ्गात् । यद्येवं ववृते इत्यादौ उरत्त्वे रपरत्वे च कृते रेफस्य लोपो न स्यात् । उच्यते । हलादिः शेष इत्यत्र उरत् [७, ४, ६६] इत्यनुवर्त्तिष्यते तेन उरदिति कृते रेफस्य निवृ-त्तिर्भविष्यति । एवं तर्हि उच्छेरौच्चिच्छदित्यत्र तुकि कृते ह-लादिः शेषेण तस्य निवृत्तिः स्यादेव । उच्यते । छे च [६, १, ७३] इत्यत्र ह्रस्वग्रहणे ऽनुवर्त्तमाने पुनर्यच्चकारेण तस्यानुवर्त्तनं

तत्सामर्थ्यात् ह्रस्वआगमी स्वीक्रियते न तु ह्रस्वान्तः समुदा-
यः । एवं चाभ्यासावयवस्यैव भक्तस्तुक् क्रियते तत्सामर्थ्यादि-
हावयवावयवोऽपि अवयविग्रहणेन न गृह्यते अन्यत्र तु गृ-
ह्यत एव। अतएव शेरत इत्यत्रावयवावयवः समुदायावयवो
भवतीत्युक्त्वा शीङो रुट् [७, १, ६] इत्यत्र शीङः सार्वधातुके
[७, ४, २१] गुण उक्तः । एवं तु शोभनच्छाय इत्यत्र तुका उ-
त्तरपदस्य व्यवधानात्पुंवद्भावो न स्यादिति दूषणम् । उच्यते ।
ह्रस्वं प्रतीदं ज्ञापकं पदान्ताद्वा [६, १, ७६] इत्यत्र तु नास्ति ।
दधि चच्छादयतीत्यत्र स्वरविधौ व्यञ्जनमविद्यमानवदिति ति-
ङ्ङतिङ [८, १, २८] इति निघातः शक्यते कर्त्तुम् । अस्यां स-
त्यां प्रातिपदिकान्तनुम्विभक्तिषु च [८, ४, ११] इत्यत्र नु-
म्ग्रहणस्य प्रयोजनं न दृश्यते । भर्तृहरिणा तूक्तम् यः प्राति-
पदिकान्तो नकारो न भवति तदर्थं नुम्ग्रहणं प्राह्णिवदिति
अत्र हि ह्विवेर्लुङि नुमो णत्वमिति । तत्र च पूर्वपदाधिकारः
समासे च पूर्वोत्तरपदव्यवहारः तत्कथमिह णत्वमिति न व्य-
क्तीकृतमिति भागवृत्तिकृतोक्तम् । यद्येवं प्रह्णिण्वन्नित्येतदर्थं
तर्हि नुम्ग्रहणं स्यात् । उच्यते । अल्पाचतरमित्यनेन प्रातिप-
दिकान्त इत्यादौ नुमः पूर्वनिपाते कर्त्तव्ये यत्प्रातिपदिकविभ-
क्तिमध्यस्थं नुम्ग्रहणं करोति तदेवं बोधयति योऽनयोरेव
मध्यस्थो नुम्नकारस्तस्य णत्वं भवतीति । अट्कुप्वाङ्नुम्व्यवा-
येपि [८, ४, २] इत्यत्र भागवृत्तिकृता प्रतिपादितं नुमः पूर्वनि-
पातलक्षणव्यभिचारचिह्नात् प्रेन्वमित्यत्र णत्वाभावः क्षुभ्नादित्वा-
द्वा तेन सह समानम् । ननु मित्त्वान्नुमः पूर्वान्तत्वे निष्कौशा-

स्विनी कुले इत्यत्र परत्वान्नुमि कृते नपुंसकह्रस्वत्वं न प्राप्नोति अजन्तत्वाभावात्। यथा सुवाक् ब्राह्मणकुलमिति। नैष दोषः। विभक्त्याश्रयणाद् बहिरङ्गो नुम् ह्रस्वत्वमन्तरङ्गं विभक्त्यनाश्रयत्वात् तत्प्रथमं भविष्यति। तदुक्तम्। न वा बहिरङ्गलक्षणत्वादिति ॥ ४ ॥

## निर्दिश्यमानस्यादेशा भवन्ति ॥ ५ ॥

षष्ठ्या निर्दिष्टस्य समुदायस्य तदेकदेशस्य वाऽऽदेशा भवन्ति। तद्यथा। पादः पत् [६,४,१३०] इति षष्ठ्या निर्दिष्टस्यैव पादः स्थाने पद्भवति द्विपदः पश्येति नाङ्गाधिकारपरिभाषया तदन्तस्य। तथा भवेतामित्यत्र तसः स्थाने तामादेशो भवति न सयासुटः। तदेकदेशस्य यथा। उदः स्थास्तम्भोः पूर्वस्य [८,४, ६१,] इति तिष्ठतेरादिदेशस्य पूर्वसवर्णो विधीयमान उदस्थादित्यत्राटो न भवति। तथा ष्यङः सम्प्रसारणम् [६,१,१३] इति ष्यङेकदेशस्य सम्प्रसारणे वाराहीपुत्र इत्यत्रानया रेफवकारयोः सम्प्रसारणाभावो व्याख्यातः॥

इयं परिभाषा षष्ठी स्थाने योगा [१,१,४९] इत्यस्यार्थे पठ्यते। तथा हि तत्र भाष्यम्। यद्यप्येकशतं षष्ठ्यर्थाः यावन्तस्ते तावन्तः षष्ठ्यामुच्चारितायां सर्वे प्राप्नुवन्ति अर्था ये पुनः समीपान्तरविकाराद्याः, शब्दस्य तु कोऽन्यो भवितुमर्हति अन्यदतः स्थानात्। ननु शब्दस्याप्यनन्तरादयः सम्बन्धाः सम्भवन्ति। अस्तेर्भूर्भवतीति सन्देहः किं स्थाने समीपे वा तत्र समीपे न भविष्यति द्वयोरेकार्थयोरेकत्र प्रयोगानुपपत्तेः। किं

च सन्देहमात्रमेतत् । सर्वसन्देहेष्विदमुपतिष्ठते भवति हि व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति स्थाने इति व्याख्यास्यामः । न तर्हीदानीमयं योगो वक्तव्यः । वक्तव्यः ! किं प्रयोजनं षष्ठ्यन्तं स्थाने यथा प्रसज्येत । यतः षष्ठी उच्चारिता तदेव कार्योपयोगि यथा स्यात् । तदेतेनैतत्प्रतिपादितं निर्दिश्यमानस्यादेशा भवन्तीति । अस्यां सत्यां शीङो रुट [७, १, ६] इत्यत्र यन्न्यासकृतोक्तं यदि रुडागमो झकारस्यैव स्यात् तदाऽदादेशो झकारस्य न स्यात् तस्यैव रुटः स्यात् आदेः परस्येति वचनात् । तथा मपर्यन्तस्य [७, २, ९१] इत्यत्र यदुदाहृतं युवकामिति साकच्कस्य स्यादिति । एतदनपेक्ष्य तत्समाधेयम् ॥ ५ ॥

## नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

अनुबन्धकृतमनेकाल्त्वं नाश्रीयते । तेनार्वणस्त्रसावनञ [६, ४, १२७] इति अर्वन्तौ अर्वन्त इत्यत्र त्रादेशोऽन्त्यस्यैव भवति न सर्वस्य । के चित्तु द्युभ्यां द्युभिरित्युदाहरन्ति । तन्न शोभनम् । दिव उत् [६, १, १३१] इत्यनेन उकारस्यैव विधानात् । तथा हि तपरस्तत्कालस्य [१, १, ७०] इति उदित्येषा संज्ञा उकारमात्रस्यैव विधीयते । एवं च दिव उदित्यनेन उकार एव केवलो विधीयते न तूच्छब्दः । अवश्यं चैतत् । अन्यथाऽतोभिस ऐस् [७, १, ९] इत्यत्र का गतिः स्यात् । न ह्यत्र तात आदेशो विधीयते किं तर्हि अत्संज्ञया अकारः संज्ञी निर्दिश्यते ॥

यत्तु स्थाघ्वोरिच्च [१, २, १७] इत्यत्रोक्तं इत्त्व कस्य तकारे-

त्त्वमिति तत्प्रतिपादकैकदेशानां प्रतिपाद्यैकदेशत्वमभ्युपगम्य। तन्मतेनैव तित्स्वरितम् [६,१,१८५] इत्यत्र तिदिति प्रत्ययग्रहणमिति भाष्ये उक्तम्। तपरस्तत्कालस्य [१,१,७०] इत्यत्र तु वर्ण एव संज्ञीत्युक्तं न पुनस्तपरः समुदायः। युक्तं चैतत्। अन्यथा तपरस्तत्कालस्येत्यत्र स्वंग्रहणानुवृत्त्या भवद्भिरित्यत्रापीत्त्वं स्यात्। इयं च परिभाषा अनुबन्धा अवयवा इत्यत्र पक्षे॥

ज्ञापकं चात्रानेकाल्शित्सर्वस्य [१,१,५५] इत्यत्र शिद्ग्रहणम्। यद्यनुबन्धेनाप्यनेकाल्त्वं स्यात् तदा सर्वे इत्यादौ शीभावस्यानेकाल्त्वादेव सर्वादेशे जसः सिद्धे शिद्ग्रहणमनर्थकं स्यात्। ननु घ्वसोरेद्धावभ्यासलोपश्च [६,४,११९] इति लोपः शिदक्तव्य * इति यः शिदभ्युपगम्यते तत्र सर्वादेशार्थं शिद्ग्रहणं स्यात् देहि धेहीति सर्वस्यैव लोपो भवति। उच्यते। यदेतल्लोपस्य शित्त्वमाश्रितं तत्सामर्थ्यादेव सर्वादेशो भविष्यति। अथ वा लोपः शिदक्तव्य * इति नाश्रयणीयम्। नानर्थकेऽलोऽन्त्यविधिरिति सर्वस्यैव लोपो भविष्यति। यत्तूच्यते तत्रानभ्यासविकारेष्विति तल्लक्ष्यस्थित्या न सर्वत्रेति॥

ननु यदि इयं परिभाषाऽस्ति णल् तर्हि सर्वादेशो न प्राप्नोति। उच्यते। आनुपूर्व्यात् सिद्धमिदम्। तथा हि। सर्वादेशे सति णलो णकारस्योपदेशे प्रत्ययादित्वमिति ततश्चुटू [१, ३, ७] इतीत्संज्ञा ततस्तस्यानुबन्धत्वम्। तदेवं सर्वादेशपूर्वकमनुबन्धत्वं सर्वादेशतां विहन्तुं न क्षमते सर्वादेशतायाः पूर्वमेव निष्पन्नत्वात्॥ ६॥

## वर्णाश्रये प्रत्ययलक्षणं नास्ति ॥ ७ ॥

वर्णाश्रये विधौ प्रत्ययलक्षणं न भवति । तेन गवे हितं गोहितं रायः कुलं रैकुलमित्यत्र प्रत्ययलक्षणेनाचीति अवायादेशौ न भवतः । लवणा यवागूरित्यत्र लवणाल्लुगिति ठको लुकि कृते प्रत्ययलक्षणेन ठगन्ताट्टिड्ढाणञ् [४, १, १५] इति ङीब्न भवति । ङीपो वर्णमात्राश्रयत्वं यथा स्यादित्येवमर्थमकारस्तत्रानुवृत्तष्टिदादिभिर्विशेष्यते न त्वकारेण टिदादयः । अत एव वारप्ख्युनामिति षष्ठ्या निर्देशः कृतः ॥

अयं चार्थः प्रत्ययलोपे प्रत्ययलक्षणम् [१, १, ६२] इत्यत्र द्वितीयेन प्रत्ययग्रहणेन साधितः । तथाहि तत्रोक्तम् । तल्लक्षणमिति वक्तव्ये प्रत्ययलक्षणमित्यत्र यत्पुनः प्रत्ययग्रहणं प्रत्ययाश्रितमेव कार्यं प्रत्ययलक्षणेन यथा स्यात् यथा सुप्तिङन्तं पदम् [१, ४, १४] इति, अचीत्येतद्वर्णमात्राश्रितं माभूदिति । ज्ञापकं चात्र अवणाकार्त्तिकीचैत्रीभ्य [४, २, २३] इति अवणेति टाबन्तो निर्देशः ॥

ननु यदि वर्णाश्रये प्रत्ययलक्षणं नास्ति तर्हि अतृणेडित्यत्र तृणह इम् [७, ३, ९२] इति इम् न प्राप्नोति इमागमस्य हल्वर्णाश्रयत्वात् । उच्यते । नायं वर्णाश्रयोऽपि त्वङ्गाधिकारेण प्रत्ययालोपाद्धलादिप्रत्ययाश्रयः ॥

एतदुक्तं भवति प्रत्यये द्विविधं कार्यं प्रत्ययनिमित्तमप्रत्ययनिमित्तं च तत्र प्रत्ययनिमित्तं यत्तदेव प्रत्ययलोपलक्षणेन यथा स्यादितरन्माभूदित्येवमर्थं प्रत्ययलोपे प्रत्ययलक्षणमित्यत्र

द्वितीयं प्रत्ययग्रहणम्। तेनैचोऽयवायाव [६, १, ७८] इत्यवादि-
र्वर्णाश्रयत्वात्परिभाषया लभ्यते इमागमस्तु प्रत्ययनिमित्त
एव अङ्गाधिकारेण प्रत्ययाक्षेपात्सम्भवने को विरोधः। न चैवं
श्रियै इदं श्र्यर्थमित्यत्राजादिप्रत्यये इयङ्ङाशङ्कनीयः। न लु-
मताङ्गस्य [१,१,६३] इति प्रतिषेधात्। यत्तु शास इदङ्हलोः
[६, ४, ३४] इत्यत्रास्याः प्रायिकत्वमुक्त्वा न्यासकारेणाहणेड्-
त्यत्र वर्णाश्रयेऽपीमागमो भवतीत्युक्तम्। तदुपायान्तरम्॥

ननु गोह्वितमित्यादौ लुको विधानं न तु लोपस्य तदेवं प्र-
त्ययलक्षणस्य प्रसङ्ग एव नास्ति तत्किं परिभाषाश्रयणेन। उच्य-
ते। लुक्यपि प्रत्ययलक्षणं भवति लोपस्यादर्शनार्थत्वात्। प्रमाणं
चात्र न लुमताङ्गऽस्येति प्रतिषेधः॥ ७॥

## क्वचिदेकदेशोऽप्यनुवर्त्तते॥ ८॥

स्वरितत्वबलेन क्वचित्सूत्रैकदेशः पदैकदेशोऽप्यनुवर्त्तते।
तेन दामहायनान्ताच्च [४,१,२७] इत्यत्र सङ्ख्याव्ययादेरित्यतः
सङ्ख्यादिग्रहणमात्रमनुवर्त्तते। तथा झोन्त [७,१,३] इत्यत्रा-
यन्नादिसूत्रादादिग्रहणनिवृत्तावपि प्रत्ययग्रहणमनुवर्त्तते॥

ज्ञापकं चात्र तस्मिन्निति निर्दिष्टे पूर्वस्य [१,१,६६] इत्यत
इति शब्दे प्रकृते तस्मादित्युत्तरस्य [१,१,६७] इति पुनरिति-
शब्दः। यदि हि सर्वैव पदानामनुवृत्तिः स्यात् तदा निर्दिष्टग्र-
हणवदितिशब्दोऽप्यनुवर्त्तिष्यते पूर्वसूत्रात्। तत्किमितिकरणे-
न। तत्कुर्वन्नाचार्यो ज्ञापयति क्वचिदेकदेशोऽप्यनुवर्त्तत इति।
एवं हि सति निर्दिष्टग्रहणमेव केवलमनुवर्त्तते नेतिकरण-
मिति॥ ८॥

## अर्थवद्ग्रहणे नानर्थकस्य ॥ ६ ॥

अर्थवदनर्थकविचारे अर्थवत एव शब्दस्य ग्रहणं नानर्थकस्य। तेन वनोर च [४,१,७] इत्यनेन कनिब्वनिपोः कर्तृरूपेणार्थेन सार्थकयोरेव वनो रेफादेशो भवति। धीवरी पीवरीति। न निरर्थकस्य। अतिशुनी अतियूनीति। तथा इन्हन्पूषार्यम्णाम् [६,४,१२] इत्यादौ क्विबन्तस्यैवार्थवतो हन्तेर्ग्रहणम्। तेन श्रीहाणौ श्रीहान इत्यत्रापि नियमेन दीर्घव्यावृत्तिर्न भवति। ननु कथमतिशुनीत्यादौ वन्शब्दस्यानर्थकत्वमुक्तं यावता स्वरूपेणार्थेनार्थवत्त्वाऽस्त्येव। यथा वृद्धिरादैच् [१,१,१] इत्यत्रोक्तम्। संज्ञासंज्ञिसम्बन्धात्प्राग्वृद्धिशब्दस्य स्वरूपेणार्थेनार्थवत्त्वात् प्रातिपदिकत्वम्। तथा चाहुः। "यस्मिन्नुच्चरिते शब्दे यदा योऽर्थः प्रतीयते। तमाहुरर्थं शब्दस्य नान्यदर्थस्य लक्षण"मिति। यो हि स्वरूपपरः प्रयुज्यते तस्य स्वरूपमेवार्थः तत्परत्वात्तस्य। न चातिशुनीत्यादौ वनादयो वर्णसमुदायाः स्वरूपपराः। अतिशुन्यादिसमुदायसंपादनाय तेषामुच्चारणात्। अत एवार्थवत् [१, २, ४५] सूत्रे वनं धनमित्यत्र नान्तस्यावधेरनर्थकत्वमुक्तम्। यदा त्वतिशुन्यादौ वनादयो वर्णसमुदायाः स्वरूपपरा भवन्ति तदा तेषां भवत्येवार्थवत्त्वमिति। आतो लोप इटि च [६, ४, ६४] इत्यत्र तु द्वयोरपि निरर्थकस्यागमस्य सार्थकस्य च प्रत्ययस्येटो ग्रहणम्। इटोऽत् [३,४,१०६] इत्यत्र विशेषणार्थे ठकारादौ कर्त्तव्ये यदिटष्टकारः कृतस्तस्यैतत्प्रयोजनमातो लोप इटि चेत्यत्र सामान्यग्रहणं यथा स्यादिति। एतच्चातो लोप इटि चेत्यत्र टित आत्मनेपदानां टेरे [४, ३,

७९] इत्यत्र च भाष्यव्याख्यानं रक्षितेनोक्तम्। किं त्वेवमिटोऽ-
दित्यत्रापि द्वयोरागमप्रत्यययोर्ग्रहणं प्राप्नोति। तथेड्विडमड्वि-
ड्वित्यत्र प्रत्याहारार्थं वर्णान्तरे कर्त्तव्ये ङकारकरणं ङित्का-
र्यार्थमपि स्यात्, एवं च सम्रंसिमह इत्यत्रानिदितां हल [६, ४,
२४] इत्यनुनासिकलोपः प्रसज्येत। तदेतत्समाधेयम्॥

पुरुषोत्तमदेवेन तु दाधाघ्वदाप् [१,१,२०] इत्यत्र दाप्दै-
पावुधात्वेकदेशयोर्दाधाशब्दयोरनर्थकयोरग्रहणमुक्तम्। तथा
शे [१, १, १३] इत्यत्र सूत्रे काशे कुशे इति पदैकदेशस्यानर्थ-
कस्य। एतदन्ये न सहन्ते। तथा हि प्रनिदाशति प्रनिधावतीत्य-
त्र सत्यामपि घुसंज्ञायां नेर्गदादि [८,४,१७] सूत्रेण णत्वं नास्ति
दाधाशब्दौ प्रति नेरुपसर्गसंज्ञाया अभावात्। तथा च भाष्य-
म्। न चैतौ दाधौ प्रति क्रियायोग इति। सनि मीमाघु [७,
४, ५४] इत्यादौ चाङ्गस्य घोर्ग्रहणादसकारादित्वाच्च दिदा-
शिषतीत्यादौ न दोषः। काशे कुशे शेशब्दस्य लाक्षणिकत्वात्
प्रगृह्यसंज्ञाया अभावो न्यासकृतैव शे इत्यत्र व्याख्यातः।

स्वरूपविधिविषया चेयं परिभाषा। अर्थवदधातुः [१,२,४५]
इत्यत्रार्थवद्ग्रहणात्। तेन प्रलम्बत इत्यत्रानर्थकादपि प्रशब्दा-
दव्ययादाप्सुप [२,४,८२] इति सुब्लुक् सिद्धो भवति। अनर्थ-
कस्याव्ययत्वमुपसर्गत्वं प्रातिपदिकत्वं च निपातानामनर्थकाना-
मर्थवत्कृतानि कार्याणि भवन्तीति वचनात्। ज्ञापकं चात्रा-
धिपरी अनर्थकौ [१, ४, ९३] इत्यधिपर्योरनर्थकयोरुपसर्गसं-
ज्ञानिवृत्त्यर्थं निपातसंज्ञाधिकारे कर्मप्रवचनीयसंज्ञाविधानम्।
अत एव निपातस्य चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति

भाष्ये प्रत्याख्यानम्। यद्येवं निपातत्वाद् यदव्ययत्वं तत्सामर्थ्या-
देव सुब्लुक् सिद्धः। नैतत्। निपातत्वस्य स्वरार्थत्वमात्रेणोप-
पन्नत्वात्। अनर्थकत्वं तु प्रशब्दस्य प्रकर्षार्थस्य प्रकरणादिनाव-
गतत्वात्। इत्यानर्थकत्वादिभक्त्यभावो न पूर्वपक्ष्यते प्रातिपदि-
कार्थेत्यत्र प्रातिपदिकग्रहणात् तस्य ह्येतत्प्रयोजनमनर्थका-
दपि प्रातिपदिकमात्रात्प्रथमा यथा स्यादिति ॥

इयं च परिभाषा स्वं रूपम् [१, १, ६८] इत्यत्र भाष्ये ज्ञापि-
ता। तत्र ह्युक्तं रूपग्रहणं न कर्त्तव्यम्। स्वं शब्दस्येत्युच्यमाने
यद्यपि शब्दस्य रूपमर्थश्च स्वं भवति। तथापि रूपमेव ग्राह्यं ना-
र्थः। यतः शब्दोच्चारणे रूपप्रतिपत्तिरादौ ततोऽर्थप्रतिपत्तिः।
तथा शब्दोऽनुकरणकाले ऽर्थं जहाति न रूपम्। तदेवमन्तरङ्गत्वा-
दसन्नबुद्धित्वाद्व्यत्वेन नित्यसम्बन्धित्वाच्च शब्दस्य रूपमेव ग्रा-
ह्यं नार्थो विपर्ययात्। अतः स्वंग्रहणादेव रूपग्रहणे सिद्धे व्या-
करणशास्त्रे रूपवदर्थोप्यङ्गीक्रियत इति लभ्यते ॥

अथ वा भ्रस्जादि [८, २, ३६] सूत्रे भ्राजग्रहणमस्यास्तित्वे
ज्ञापकम्। यदि ह्यनर्थकस्यापि ग्रहणं स्यात्तदा राजग्रहणेनैव
भ्राजैकदेशस्यापि ग्रहणे सिद्धे राजभ्राजेति भ्राजग्रहणं न कु-
र्यात्। कृतं चातो ज्ञापकमर्थवत एव ग्रहणं नानर्थकस्येति ॥ ९ ॥

## न वर्णग्रहणेषु ॥ १० ॥

पूर्वापवादोयम्। वर्णा अकारादयः। तद्ग्रहणेऽर्थवत्परिभाषा
नास्ति। यथेको यणचि [६, १, ७७] इति निरर्थकस्यापीको
निरर्थकेऽचि यण् भवति भवत्यत्र भवत्विति। अन्यथा ङीबादि-
संबन्धिन एव सार्थकस्येकः सार्थके एवाचि यण् स्यात् कुमार्यौ

मश्वाविति । तथाऽस्य च्वौ [७, ४, ३२] इति निरर्थकस्यापि भवति । शुक्लीकरोतीति अन्यथाऽर्थवत एव विष्णुवाचकाकारस्य स्यात् । इको झल् [१, २, ९] इत्यत्रेगिति योयं वर्णसमुदायः स किं सार्थकः प्रत्याहारो गृह्यतां निरर्थको वा धातुरिति विचारे युक्तमेव रचितेनार्थवत्परिभाषया प्रत्याहारग्रहणमुक्तम् । यतः प्रत्याहारे व्यवस्थिते उत्तरकालं वर्णग्रहणं न तु प्रथमत एव ॥

ननु यदि वर्णग्रहणेऽर्थवत्परिभाषा नास्ति कथं तर्हि विज इट् [१, २, २,] इत्यत्रार्थवत इटो ग्रहणं न्यासकृता प्रकृतं(?)। तथा इटोत् [३, ४, १०६] इत्यत्र सार्थकस्येटो ग्रहणमभिधीयते । कथं वा सीयुडागमे कृते केवलस्येटः सार्थकत्वम् ससीयुट्कस्यैवार्थवत्त्वात्, यथा भिन्द्युरित्यत्रोस आनर्थक्यमुक्तम् । कथमिड्ग्रहणेऽर्थवत्परिभाषाभिधीयते यावता आतो लोप इटि च [६, ४, ६४] इत्यत्रोक्तमिड्वद्धिमहिङ्गित्यत्र ठे कर्त्तव्ये टित्करणमागमप्रत्यययोरुभयोरपि ग्रहणार्थमिति । तदेवं सामान्यग्रहणेनैव भवितव्यम् । उच्यते । यत्तावदुक्तं वर्णग्रहणमिदम् । तन्न । यतो यत्रानुबन्धमुच्चार्य कार्यं विधीयते तत्र वर्णाश्रितः प्रतिषेधो न भवति । अत्र च ग्रहोऽलिटि दीर्घ [७, २, ३७] इत्यत्रेड्पवादे ईटि कर्त्तव्येऽगृहीदित्यत्र स्थानिवद्भावेन इट ईटि [८, २, २८] इति सिचो लोपार्थं यदेतत्कृतं दीर्घग्रहणं तदेतत्सामान्यज्ञापकम् । तेन यत्रानुबन्धोपादानं तत्र न वर्णग्रहणेष्विति न प्रवर्त्तते । यद्येवमिको यणचि [६, १, ७७] इत्यत्राप्यनुबन्धोपादानादनया नोपस्थातव्यम् । नैतदस्ति । ककारा-

दीनां समुदायानुबन्धत्वादिगिति नेकारादीनां सानुबन्धाना-
मुपादानम् । समुदायानुबन्धानामवयवानुबन्धता न स्वीक्रियते ।
कमेर्णिङ् [३, १, ३०] इति ङकारेण सङिति प्रत्याहारं कृत्वा
सङन्ता धातव इति कर्त्तव्ये सनाद्यन्ता धातव [३, १, ३२] इति
ज्ञापकात् । ततो न ससंसिमद्ध इत्यत्रानुनासिकलोपो भवति ।
कुरुत इत्यत्र तु ञित्त्वादात्मनेपदं गन्धनादिसूत्रादनन्तरं ना-
नुपराभ्यामिति कर्त्तव्येऽनुपराभ्यां कृञ [१, ३, ७९] इति य-
त्कृतं तत्स्वरितञित [१, ३, ७२] इत्यस्यापि प्रतिषेधो भवतीति
ज्ञापनार्थम् । तदेवं कृञो ञकारस्य समुदायानुबन्धत्वेऽप्यवय-
वानुबन्धत्वमिति । यत्तु स्वादि [४, १, २] सूत्रे औङसिति कृते
ङित्वाड्डिलोपो दोष उक्तः । सोऽनुपराभ्यां कृञ इत्यस्य सा-
मान्यज्ञापकत्वमभ्युपगम्य बोद्धव्यः । यदप्युक्तं सागमकस्यैवार्थ-
वत्त्वमिण्मात्रं त्वनर्थकमिति । तदपि न । प्रक्रियाक्रमेणागमा-
स्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इत्याश्रयणात् । भिन्द्युःप्रस्तावे
त्वनागमकानां सागमका आदेशा भवन्तीत्याश्रितम् । यच्चा-
प्युक्तं ठे कर्त्तव्ये टित्त्वात्सामान्यग्रहणमित्यादि । तदपि न । सति
प्रयोजने ज्ञापकात् प्रत्ययागमयोर्ग्रहणमुच्यते । विज इट् [१,
२, २] इत्यित्र न किं चिदागमस्य ङित्त्वे प्रयोजनम् । अत-
न्निमित्तत्वाद् गुणस्य । इटोत् [३, ४, १०६] इत्यत्र च प्राकर-
णिकस्येटोऽदादेशविधानात्कुत आगमप्रसङ्गाशङ्केति ॥

ज्ञापकं चाचोञ [१, १, १७] इति सूत्रम् । यद्यर्थवत्परिभाषा
वर्णग्रहणेपि स्यात्तदा उ इतीत्यत्रेतिशब्देकारेऽनर्थकेऽर्थवत्प-
रिभाषयैव यणादेशाप्रसङ्गः सिद्ध इत्युञ इति प्रगृह्यसंज्ञा न

कृता स्यात्। कृता चानो ज्ञापकम् ॥

अथ वा भक्ष्येण मिश्रीकरणम् [२, १, ३५] इति निर्देशो ज्ञापकः ॥ १० ॥

## भाव्यमानोऽण् सवर्णान्न गृह्णाति ॥ ११ ॥

विधीयमानोऽण् सवर्णानां ग्राहको न भवति । तेनेहेतीदम इश् [५, ३, ३] इति त्रिमात्रस्य स्थानिन आन्तरतम्यात् त्रिमात्र आदेशो न भवति । तथा हे अनड्वन् इत्यत्राम्संबुद्धौ [७, १, ९७] इति दीर्घो न भवति । लविता लवितुमित्यत्र वृतो वा [७, २, ३८] इतीटो विकल्पेन दीर्घविधानादिटो न सवर्णग्रहणमित्याहुः ॥

इयं च परिभाषा अणुदित्सवर्णस्य चाप्रत्यय [१, १, ६९] इत्यत्राप्रत्यय इत्यस्यैवार्थः पठ्यते। तथा हि। प्रत्याय्यते विधीयते भाव्यते इति प्रत्ययः न प्रत्ययोऽप्रत्ययः, अभाव्यमान इत्यर्थः। अप्रत्ययोऽण् सवर्णान् गृह्णातीत्यस्मिन्नर्थे भाव्यमानोण् सवर्णान्न गृह्णातीति व्यक्तमवतिष्ठते ॥

सुखप्रतिपत्त्यर्थं ज्ञापकमपि केचिदाहुः। ईहल्यघोः [६, ४, ११३] इति दीर्घेकारविधानम् । अन्यथा दीर्घस्य स्थाने सावर्ण्याद्दीर्घ एव स्यात् ॥

अनित्या चेयं परिभाषा। तेनामू इत्यत्र द्विमात्रस्यौकारस्य द्विमात्र एवोकारो भवति। अत्र चार्थे दिव उत् [६, १, १]१३ इति तपरकरणं ज्ञापकम्। यदि भाव्यमानोऽण् सर्वथैव सवर्णान्न गृह्णाति तदा द्युभ्यामित्यत्र च्छ्वोः शूडनुनासिके च [६, ४, १९] इत्यूठ्यपि कृते दीर्घस्य स्थाने ह्रस्वः सिद्धः स्यात् किं

तपरकरणेन। तत्कृतं ज्ञापयति क्व चिद्भाव्यमानोऽपि सवर्णान् गृह्णातीति। ग्रास इ्दङ् हलोः [६, ४, ३६] इति तपरकरणं वा ज्ञापकमिति ॥ ११ ॥

## यस्मिन्विधिस्तदादावल्ग्रहणे ॥ १२ ॥

यस्मिन्निति सप्तमीनिर्दिष्टे अल्ग्रहणे वर्णग्रहणे यो विधिः स तदादौ समुदाये भवति न तदन्ते ॥

तेन पिवतेरेशि पपे इत्यत्र पाघ्रादि [७, ३, ७८] सूत्रेण पिवादेशो न भवति। तथाऽचीति इयङ्गुवङावजादौ भवतः, श्रियो लुलुवतुर्लुलुवुरिति। श्रियै लुलुव इत्यत्रापि व्यपदेशिवद्भावात्। यदि त्वत्र तदन्तविधिः स्यात् श्रियो लुलुवतुरित्यत्र न स्यात् हलन्तत्वात् ॥

अयं चार्थो येन विधि [१, १, ७२] सूत्रे तदन्तविध्यपवादस्तदादिविधिरुपसंख्यातः परिभाषारूपेण पठ्यत इति ॥

वामनेन तु गुणोऽपृक्त [७, ३, ९१] इत्यत्रापृक्तग्रहणादियं वर्णिता। तदुक्तम्। उतो वृद्धिर्लुकि हलीत्यनुवर्त्तमाने हलादौ गुणे प्राप्तेऽपृक्तग्रहणं हल्मात्र एव यथा स्याद्धलादौ माभूदित्येवमर्थं क्रियमाणं ज्ञापयत्यस्तीयं परिभाषा यस्मिन्विधिरित्यादि। तेन हलीत्यनुवृत्तौ हलादौ स्यात्। अपृक्तग्रहणे तु वर्णमात्र एव भवति प्रैर्णोदिति ॥

यद्येवं क्ङिति संप्रसारणं क्ङादावेव स्याद् गृहीतो गृहीतिरिति। यगादौ न स्याद् गृह्यत इति। उच्यते। क्ङितीति नेदं वर्णग्रहणमिति क्ङावितौ यस्येति बहुव्रीहिणा वर्णसमुदायस्य परिग्रहात् ॥ १२ ॥

## विधिविधानविधिभाजां त्रयाणां संनिधाने तदन्तविधिर्भवति ॥ १३ ॥

तेन एरच् [३, ३, ५६] इतीवर्णान्तादच्प्रत्ययो भवति । इयं परिभाषा येन विधि [१, १, ७२] सूत्रस्यैव सामर्थ्यात्तस्यो-ऽर्थः पठ्यते । तथाहि । येनेति करणे तृतीया न चाकर्तृकं कर-णमस्तीति कर्त्ताप्याश्रितः । स पुनरिह संबन्धिशब्दत्वादन्तश-ब्देनावयववाचिना सन्निधापितः समुदायो विज्ञायते । स च क-र्त्ता त्रिभिः प्रकारैः सन्निहितो भवति । क चिन्निर्देशात् । यथा ईदूदेद्द्विवचनम् [१,१, ११] इति द्विवचनं कर्त्तृभूतं निर्दि-ष्टं यत्तदीदादिभिः करणैः प्रगृह्यसंज्ञां विदधाति । क चित्प्र-करणात् । यथा एरच् [३, ३, ५६] इत्यत्र धातोरित्यधिकारात् प्रकरणाद्धातुः कर्त्ता संनिधापितः स इकारेण करणेनाचं वि-दधाति । क चित्सामर्थ्यात् । यथा इको झल् [१, २, ९] इत्यत्र धातोरेव च सन् विधीयते इति सामर्थ्याद्धातुः कर्त्ता संनिधा-पित इका करणेन सनः कित्त्वं विदधाति । तदेवमीदूदेद्द्वि-वचनमित्यादौ प्रगृह्यसंज्ञाया विधीयमानस्य कर्मणो विधेरीदू-देतः करणस्य विधानस्य द्विवचनस्य च कर्त्तुर्विधिभाजः संभ-वाद्येन विधिस्तदन्तस्येति तदन्तविधिर्विधीयते । तदेवं येन वि-धिः [१, १, ७२] इत्यस्य सूत्रस्यार्थ एवायमेवंविधो विधिविधा-नविधिभाजां त्रयाणां सन्निधाने तदन्तविधिर्भवति । एचोऽय-वायाव [६, १, ७८] इत्यादौ विधिभाजोऽसंभवान्न प्रवर्त्तते । न-नु शब्दानुशासनप्रस्तावाच्छब्दरूपं कर्त्तृ विधिभाक् स्यात् त-त्कथं कर्त्तुरभावोऽभिधीयते । उच्यते । शब्दरूपं कर्तृत्वेन ना-

श्रीयते अतिप्रसङ्गादिति सुप्तिङन्तं पदम् [१, ४, १४] इत्यत्र रक्षितेन व्याख्यातम् । तेनैचोऽयवायाव [६, १, ७८] इत्यादौ शब्दरूपस्यास्वीकारादेङ्मात्रस्यैव स्थानित्वमङ्मात्रस्य परत्वं नैजन्तस्याजादाविति । तस्य स्थानित्वे वृक्षावत्रेत्यादावावादयोऽनेकाल्त्वात्सर्वादेशाः स्युः । ननु निर्दिश्यमानस्यादेशा भवन्तीत्येच एव स्थाने आदेशेन भवितव्यं नैजन्तस्य । सत्यमेतद्व्यक्तौ जातौ तु दोषः । अन्यस्त्वाह । वर्णविधित्वमल्विधीनां न स्यात् । तथा च येन विधि [१, १, ७२] सूत्रे भागवृत्तिकृतोक्तम् । इको यणचि [६, १, ७७] इतीका अचावयवेनावयविनः समुदायस्य संनिधापितत्वादिगन्तस्याजादौ यणादेश इति वर्णविधिरेव न स्यात् तिष्ठतु दध्यशान त्वं शाकेनेति । किं तु सत्यपीगन्तस्याजादौ यणादेशे पदविधित्वं न भवत्येव पदस्य पदात् सुप्सुपेत्याद्यनुच्चारणेन यणादेशादिकार्याणां विधानादिति ॥ १३ ॥

इति महामहोपाध्यायश्रीसीरदेवकृतायां परिभाषावृत्तौ प्रथमः पादः ॥ १ ॥

## एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥ १४ ॥

एकयोगनिर्दिष्टानां पदानां प्रवृत्तिर्वा निवृत्तिर्वा सहैव स्यात् । न त्वेकस्य प्रवृत्तिरपरस्य निवृत्तिः ॥

तेन उश्च [१, २, १२] इत्यत्र लिङ्सिचावात्मनेपदेष्वित्येतत्सर्वमनुवर्त्तते । तदयमर्थः । ऋवर्णान्ताद्धातोः परौ लिङ्सिचा-

वात्मनेपदेषु किता भवत इति। तत्र हि ऋ इति ऋवर्णान्तो धातुर्गृह्यते न ऋ गताविति। अत्र न्यासकारः कारणमाह। प्रैत्रीयमाचार्यस्य यत्रास्य धातोर्ग्रहणमिच्छति तत्रावश्यं श्तिपा निर्देशं करोति। यथाऽर्त्तिपिपर्त्त्योश्च [७, ४, ७७] सर्त्तिशास्त्यर्त्तिभ्यश्च [३, १, ५६] इति। अत्र च न्यासे सन्देहविच्छेदायेत्यध्याहार्यम्। तेनायमर्थः। यत्रास्य धातोर्ग्रहणमिच्छति तत्र सन्देहविच्छेदायावश्यं श्तिपा निर्देशं करोति। यत्र न सन्देहस्तत्र करोति न करोति च। एवं च स्मिपूङ्रञ्ज्वशां सनि [७, २, ७४] इत्यत्र ऋगतावित्यस्य ग्रहणेऽपि न श्तिपा निर्देशः। तत्र हि किरश्च पञ्चभ्य [७, २, ७५] इत्यत्र दृङ्धृङो-र्ग्रहणान्न सन्देहः। अन्यथा दिदरिषते दिधरिषते इत्यत्र स्मिपूङ्रञ्ज्वशां सनि [७, २, ७४] इत्येवेटः सिद्धत्वाद्दृङ्धृङोर्ग्रहणमनर्थकं स्यात्। यत्तु तत्र रक्षितेनोक्तम्। संदेहविच्छेदायेत्यत्राध्याहार्यम्। ततश्च स्मिपूङ्रञ्ज्वशां सनि [७, २, ७४] इत्यत्राविरोधः। किरश्च पञ्चभ्य [७, २, ७५] इत्यत्र कृगृस्वीकार एव विच्छेदहेतुरिति। तदयुक्तम्। यतो वृतो वा [७, २, ३८] इत्यनुवृत्तौ इट् सनि वा [७, २, ४१] इति विकल्पेनेटि प्राप्ते नित्यमिटो विधानार्थं कृगृग्रहणं स्यात्। उच्यते। यदि नित्यमिटो विधानार्थं कृगृग्रहणं स्यात् तदा किरश्च पञ्चभ्य [७, २, ७५] इति सूत्रमकृत्वा स्मिपूङ्रञ्ज्वशकृगृप्रच्छां सनीत्येवं कुर्यात्। न चोत्तरत्र रुदादिभ्यः सार्वधातुके [७, २, ७६] इत्यत्र पञ्चभ्य इत्यस्य प्रयोजनमस्तीति वाच्यम्। रुदादिपञ्चधातुपरिग्रहार्थं तत्र वृत्करणं कर्त्तव्यं तत एव व्यवस्था भविष्यति।

अथ वा कृगृस्वीकार इति बहुव्रीहिरयं कृग्रोः स्वीकारो यस्मि-न्निति कृगृस्वीकारः किरश्च पञ्चभ्य [७, २, ७५] इति योगस्त-स्मिन्कृगृस्वीकारे किरश्च पञ्चभ्य [७, २, ७५] इति सूत्र एवा-न्तर्भूतयोर्हङ्धृञोर्ग्रहणं विच्छेदहेतुरित्यर्थः । अथ वा स्मिपू-ङ्रञ्ज्वशां सनि [७, २, ७४] इत्यत्र ऋग्रहणं ह्रस्वान्तार्थं तावन्न भवति हङ्धृङ्ग्रहणात् । दीर्घान्तादपि यदि इट् सनि वा [७, २, ४१] इति विकल्पः स्याद् दीर्घार्थमपि न स्यान्नि-त्यविकल्पयोर्विरोधात् । एवं च ऋग्रहणमनर्थकं तस्मादिट् स-नि वा [७, २, ४१] इत्यत्र ऋग्रहणं नानुवर्त्तते हङ्वृञावेवानु-वर्त्तेते वृङ्वृञोरेवेड्विकल्पः ऋतां तु स्मिपूङ्रञ्ज्वशां सनि [७, २, ७४] इत्यनेनैव नित्यमिट् सिद्ध इति कृगृग्रहणमेव वि-च्छेदहेतुरिति ॥

ज्ञापकं चात्र हनः सिच् [१, २, १४] इति सिज्ग्रहणम् । यद्येकसूत्रनिर्दिष्टयोरपि पदयोरेकमनुवर्त्तते नापरमिति तदा लिङ्सिचावात्मनेपदेषु [१, २, ११] इत्यतो लिङ्ग्रहणं नानुव-र्त्तिष्यते सिज्ग्रहणमेवानुवर्त्तिष्यत इति सिज्ग्रहणमनर्थकं स्यात् । अयं च स्वरितत्वलभ्योऽर्थः परिभाषारूपेण पठ्यते । अत एवोपदेशेऽजनुनासिक इत् [१, ३, २] इत्यतो लशक्वतद्धिते [१, ३, ८] इत्यत्र इद्ग्रहणानुवृत्तावपि अनुनासिकग्रहणं ना-नुवर्त्तते ॥

उपदेशग्रहणानुवर्त्तनं प्रति रक्षितानुन्यासयोर्विवाद एव । तथाहि । गाङ्कुटादि [१, २, १] सूत्रेऽनुन्यासकारेणोक्तमादेश-पक्षे इद्ग्रहणमनर्थकमादेशे भवतो लशक्वतद्धित [१, ३, ८]

इत्यनेनैवेत्संज्ञायाः सिद्धत्वादित्यादि । रक्षितेन टुक्रमादिभूतो ङकारो लशक्वतद्धिते [१, ३, ८] इत्यत्रोपदेशग्रहणानुवृत्तेरस-तीदित्येतस्मिन्नेत्संज्ञक इति न ज्ञापकमिदित्येतदादेशाभाव-स्येति । तत्रायं रक्षिताभिप्रायः । लशक्वतद्धिते [१, ३, ८] इत्यत्रा-सत्युपदेशाधिकारे निश्शब्दात्सप्तमीबहुवचने निच्श्वित्यत्र श-कारस्येत्संज्ञा स्यात् । न चेत्संज्ञायां कर्त्तव्यायामसिद्धत्वमस्ति । ससजुषोरुः [८, २, ६६,] इत्यत्र रोरुकारस्यानुनासिक्यप्रति-ज्ञानसमर्थ्यात्, रिङ्शयग्लिङ्क्षु [७, ४, २८] इति निर्द्देशाच्च सामान्येनेत्सञ्ज्ञायां कर्त्तव्यायामसिद्धत्वाप्रवर्त्तनस्य ज्ञापित-त्वात् । तथा भियः क्रुक्लुकनौ [३, २, १७४] इति भीलुक इत्यत्र क्लुकनः ककारे लुप्ते लकारस्येत्सञ्ज्ञा स्यात् । नैतदस्ति । प्र-योजनाभावादेवेत्सञ्ज्ञाया अप्रवृत्तिः । स्वरस्तु न प्रयोजनं नि-त्त्वादेव तस्य सिद्धत्वात् । एवं तर्हि यङ्लुकि बेभीलुक इत्यत्र स्वरः प्रयोजनम् । तथाहि । नित्त्वादेकार उदात्तो भवति लि-त्त्वादीकारः स्यादिति । अनुन्यासकारस्यायमभिप्रायः । निच्-श्वित्यत्रेत्सञ्ज्ञा न भविष्यत्यसिद्धत्वात् । यत्तूक्तं रोरुकारस्यानु-नासिक्यप्रतिज्ञानसामर्थ्याल्लिङ्क्ष्विति निर्द्देशाच्चासिद्धत्वं न भ-वतीति । तदुपदेशे ऽजनुनासिक इत्, हलन्त्यम् [१, ३, ३] इ-त्येतत्सूत्रद्वयकर्त्तव्यतायामेवासिद्धत्वं न भवति तत्रैव प्रमाणस-म्भवात् । अन्यत्र त्वसिद्धत्वमेव । बेभीलुक इत्यत्र यङ्लुकश्छा-न्दसत्वादित्सञ्ज्ञा न भविष्यतीति । यदि वा लकारस्येत्सञ्ज्ञा-यां यणादेशे कृते बेभ्युक इत्येक एवाजिति क लित्स्वरः स्यात् । निच्श्विति जस्त्वेन शकारस्य जकारः स्तुत्वेन सकारस्य शकारः

खरि च [८, ४, ५५] इति चर्त्वं जकारस्य चकारः। ननु स्तोः श्चुना श्चुः [८, ४, ४०] इत्यत्र रक्षितेनोक्तं झलां जश् झशि [८, ४, ५३] इति निर्देशात् शकारस्य जश्त्वं नास्ति। अत एव मस्जिनशोर्झलि [७, १, ६०] इत्यत्र मज्जतिसिद्धये जश्त्वेन सकारस्य दकारस्तस्य भृज्जति [६, १, १६] इति निर्देशादसिद्धत्वाभावात् श्चुत्वेन जकारो न्यासे उक्तः। अन्यथा श्चुत्वेन सकारस्य शकारे कृते जश्त्वेन जकारे सिद्धे भृज्जति [६, १, १६] इति निर्देशादसिद्धत्वाभावप्रवर्त्तनमयुक्तम्। एवं च कथमत्र जश्त्वेन शकारस्य जकारः। उच्यते। झलां जश् झशि [८, ४, ५३] इत्यत्र चवर्गपरस्य शकारस्य जश्त्वाभावादन्यत्रापि चवर्गपरस्यैव जश्त्वाभावस्तुल्यजातीयत्वादिति यथा कथं चित्। ज्ञापकसिद्धं न सर्वत्रेति वा॥ १४॥

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि॥ १५॥

अयं चार्थोऽर्थवत् [१, २, ४५] सूत्रप्रणयनादस्तीत्याहुः। अन्यथा सर्वेषामुणादीनां धातुजत्वेन कृदन्तत्वात् प्रातिपदिकसंज्ञासिद्धौ तन्न कुर्यात्। अन्ये त्वतः कृकमि [८, ३, ४६] इत्यत्र कमिग्रहणं कृत्वा कंसग्रहणादेतामाहुः। तेन कृगृकुटिविदिभिदिभ्यश्च इः किदितीकारप्रत्ययान्तयोः किरिगिरिशब्दयोरोसि यणादेशे कृते धातुत्वाभावाद्धलि च [८, २, ७७] इति दीर्घत्वन्न भवति किर्योः गिर्योरिति। एतच्च न सम्यक्। अचः परस्मिन् [१, १, ५७] इति स्थानिवत्वाद्दीर्घत्वाप्रसङ्गात्। न चास्ति दीर्घविधिं प्रति न स्थानिवदिति। स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति वचनात्। यथा प्रतिदीव्नेति। एवं तर्हि जीर्यते-

धातोर्जीर्यतेः क्तिन् रश्च व इति क्तिन् प्रत्यये इत्त्वे रपरत्वे च रेफस्य वकारे कृते जिव्रिरिति धातुत्वाभावाद्दीर्घो न भवतीति ॥ १५ ॥

## सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ १६ ॥

तेन बाभ्रवाश्च शालङ्कायनाश्च बाभ्रवशालङ्कायनं बाभ्रवशालङ्कायना इत्येकवचनं बहुवचनं चोपपन्नं भवति। यद्येवं समाहारद्वन्द्वेपि वाक्त्वचं श्रीस्रजम् इत्यत्रापि द्विवचनं प्राप्नोति पक्षे तथेतरेतरयोगद्वन्द्वेऽपि पक्षे एकवचनं स्यात्। उच्यते। सर्वो द्वन्द्व इत्यनेन समाहारद्वन्द्वस्तथेतरेतरयोगद्वन्द्वश्च नापूर्वतया विभाषैकवत् क्रियते किं तर्हि न्यायसिद्धोऽनूद्यते। तथाहि। चार्थे द्वन्द्व [२, २, २९] इत्यनेन चार्थे द्वन्द्वः क्रियते चार्थश्चेतरेतरयोगः स एव यदोद्रिक्तावयवभेदो भवति तदावयवभेदानुगमाद् द्विवचनबहुवचने सिद्धे एव यदा तु तिरोहितावयवविवक्षा संहतिः प्रधानमिति यावत् तदा समाहार इति तच्च संहतिप्रधानत्वादेकवचनमिति। तदेवं चार्थे एव सर्वो द्वन्द्वो विभाषयैकवद्भवतीति परिभाषारूपेण पठ्यते। ननु चार्थः समुच्चयो नेतरेतरयोगः। चशब्दप्रयोगे समुच्चयस्यैव प्रतीतेः। सत्यमेतत्। किंतु तत्प्रभेद एवेतरेतरयोगो न तु समुच्चयादन्यः। तथाहि। समुच्चय एव यदा युगपदर्थाभिधायिनां परस्परापेक्षाणां पदानां भवति तदा द्वन्द्वः क्रियते। एतावतैवेतरेतरयोगश्चार्थ एवेत्युच्यते। ननु यदि चार्थे एवायं सर्वो द्वन्द्व इत्यादि किमर्थं तर्हि तिष्यपुनर्वस्वोः [१, २, ६३,] इत्यत्राऽस्य बहुवचनग्रहणं ज्ञापनार्थं न्यासकृताभिधीयते। तिष्य एकः पुनर्वसू च द्वौ इति बहुत्वाद्ब-

हुवचनं सिद्धमेव एकवचनस्य प्रसङ्ग एव नास्ति । बहुवचनप्रस-
ङ्ग एव द्विवचनं भविष्यति किं बहुवचनस्येत्यनेन । तत्कृतं ज्ञापय-
ति । अस्तीयं परिभाषा सर्वो द्वन्द्व इत्यादि । उच्यते । ज्ञापयति
बोधयति ज्ञापकं बोधकम् । कस्य बोधकम् । अभिमतस्य निय-
मस्येति । काभिमतनियमः । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् [२,
४, २] इत्यत्र समाहारे एव प्राण्यङ्गादीनामिति । प्राण्यङ्गादी-
नामेव समाहारे नान्येषामिति विपरीतनियमे हि तिष्यपुनर्व-
सूनां सर्वदा इतरेतरयोग एव द्वन्द्वः स्यान्नसमाहारे । एवं च ब-
हुवचनप्रसङ्ग एव द्विवचनमिति बहुवचनग्रहणमनर्थकं स्यात् ।
एतच्च द्वन्द्वश्च प्राणितूर्य [२, ४, २] इत्यत्र प्राण्यङ्गादीनामेव
समाहार इत्येवं विपरीतनियमो नाश्रीयते तिष्यपुनर्वस्वोर्नक्ष-
त्रद्वन्द्वे बहुवचनस्य [१,२, ६३] इति बहुवचनग्रहणादित्यादिना
ग्रन्थेन रक्षितेन व्याख्यातम् । नन्वेवं द्वन्द्वश्च प्राणितूर्य [२, ४,
२] इति सूत्रमनर्थकं स्यादिति । तेन हि समाहारे एवैकवद्भावो
विधीयते । तत्र समाहारद्वन्द्वैकत्वादेकत्वादेकवचनं सिद्धमेव ।
उच्यते । प्राण्यङ्गादीनां समाहार एव द्वन्द्वो यथा स्यादितरेत-
रयोगो माभूदिति सूत्रप्रयोजनम् । ननु किमर्थं समाहार एक-
वत्त्वं क्रियते नेतरेतरयोग एवैकवद्भावः क्रियताम् । एवं च
समाहारद्वन्द्वग्रहणं प्रयत्नप्रतिपाद्यं न भवति कार्यं च विधि-
मुखेनैव प्रवर्त्तते । उच्यते । इतरेतरयोग एवैकवद्भावे सत्य-
स्थित्वचमित्यत्र समाहारलक्षणो द्वन्द्वाच्चुदषहान्तात्समाहार
[५,४,१०६] इति टच् स्यात् । नन्वेवमपि पूर्वोक्तप्रकारेण समा-
हार एवैकवद्वचनं भवति समाहारस्यैक एव । एवं चैकवदिति

वतिर्नोपपद्यते न ह्येक एवैकवद्भवति । उच्यते । बुद्ध्यानेकत्व-
मारोप्य वतिर्भविष्यति । उक्तं च । बुद्धिर्हि भगवत्यभेदेऽपि भेदं
जनयति । यथा राहोः शिर इति । अथ वा नायं वतिः किं तर्हि
वदेर्विजन्तो ऽयमेकवदिति । ननु च तथाप्यशेषद्वन्द्व एकत्वा-
विधानात् सर्वशब्दार्थोऽघटमानः स्यात् । उच्यते । सर्वो द्वन्द्व
इति कोऽर्थः । इतरेतरयोगसमाहारात्मक इत्यर्थः । नन्वेवमपि
विभाषा वृक्षमृगादि [२, ४, १२] सूत्रमनर्थकम् । अनयैव परि-
भाषया बाभ्रवशालङ्कायनं बाभ्रवशालङ्कायना इतिवत् प्लक्षन्य-
ग्रोधं प्लक्षन्यग्रोधा इत्येवमादीनां सिद्धत्वात् । उच्यते । सिद्धे प-
रिभाषयैकत्वे वृक्षादीनां सजातीयैरेव द्वन्द्व एकवद्यथा स्यात्, न
विजातीयैरिति व्यतिकरनिरासार्थं विभाषयैकवद्विधानमिति ।
तेन पश्वादीनां विजातीयैर्द्वन्द्व एकवन्न भवतीतीतरेतरयोगो-
ऽसौ द्वन्द्वो भवति । तथा च भट्टिः । नरवानररक्षसामिति ॥१६॥

इति महामहोपाध्यायसीरदेवकृतायां परिभाषावृ-
त्तौ गाङ्कुटादिपादः ॥ २ ॥

ऋदित्सवर्णं गृह्णाति न सवर्णमात्रम् ॥ १७ ॥

उदिद्वर्णोऽणुदित्सवर्णस्य [१, १, ६९] इति स्थानप्रयत्नाभ्यां
विशिष्टमेव सवर्णं गृह्णाति न सवर्णमात्रम् । तेन चोः कुः [८,
२, ३०] इति कुग्रहणे हकारस्य ग्रहणं न भवति ॥

ज्ञापकं चात्र न विभक्तौ तुस्माः [१, ३, ४] इत्यत्र तुग्रहणं
कृत्वा सकारग्रहणमिति । अयं च न्यायसिद्ध एवार्थः सुखप्रतिप-
त्त्यर्थं ज्ञापकेनोक्तः । तथाहि । स्थानप्रयत्नाभ्यां सदृशस्य सवर्ण-
संज्ञा विधीयमाना तकारसकारयोः स्पृष्टेषत्स्पृष्टयोः प्रयत्नभेदादेव

सावर्ण्यं नास्तीति ननु कुतो ज्ञापकम् । यत एव स्थानप्रयत्नाभ्यां सादृश्यात् सावर्ण्यमत एवाइउणिति सूत्रे वृत्तिकृतोक्तम् । ह्रस्वमवर्णं प्रयोगे संवृतम् । दीर्घप्लुतयोस्तु विवृतत्वम् । तेषां सावर्ण्यप्रसिद्ध्यर्थमकार इह शास्त्रे विवृतः प्रतिज्ञायत इति । तत्रैव न्यासकारेणोक्तम् । विवृततरः प्रतिज्ञायत इति द्रष्टव्यम् । अनुन्यासकारेण तु विवृततमः प्रतिज्ञायत इति द्रष्टव्यमित्युक्तम् । अन्यथा आकारस्य विवृततमत्वादकारस्य विवृततरत्वप्रतिज्ञाने सत्यपि सावर्ण्यं न स्यात् । न्यूनाधिकप्रयत्नत्वात् । न्यूनाधिकप्रयत्नानां च सावर्ण्यं नास्त्येव । तथा च नाज्झलौ [१,१,१०] इति सूत्रे शकारस्य सावर्ण्येनाच्त्वाभावार्थं भाष्यकारेणोक्तम् । स्पृष्टं करणं स्पर्शानाम्, ईषत्स्पृष्टमन्तस्थानाम्, विवृतं करणमूष्मणाम्, ईषदित्यनुवर्तते, स्वराणां च, विवृतमित्यनुवर्त्तते ईषदिति निवृत्तमिति । एतेनेकारशकारयोर्विवृतेषद्विवृतयोः सावर्ण्याभाव उक्तो भवति । एवं च नाऽज्झलौ [१, १, १०] इत्यस्यापि प्रयोजनं न दृश्यते । दधि शीतमित्यादौ न्यूनाधिकगुणत्वादेव सावर्ण्याभावात् । न्यूनाधिकगुणानां च सावर्ण्याभावोऽवश्यमेवाङ्गीकर्त्तव्यः । अन्यथा एङः पदान्तादति [६, १, १०९] इत्यादौ एकारौकाराभ्यां सावर्ण्यादैकारौकारयोरपि ग्रहणं स्यात् । रक्षितेन तु एङ [६,१,१०९] इत्यत्र एओङ्ङकारेण प्रत्याहारग्रहणसामर्थ्यात् सावर्ण्याभाव उक्तः । अन्यथा ऐकारौकारयोरपि ग्रहणे एच इति चकारेण प्रत्याहारग्रहणं कुर्यात् । किं त्वेवं यत्र स्वरूपेणैकार उपादीयते तत्र सावर्ण्यं स्यात् । ईदूदेद्द्विवचनम् [१, १, ११] इति । अत्र एकारेण ऐकारस्य ग्रहणे

सावर्ण्यभावात्करवावशायितीत्यत्रापि प्रगृह्यसंज्ञा स्यात् । न चात्र तपरकरणात्सावर्ण्याभावो वाच्यः । तपरकरणस्य प्रयोजनान्तराभावेन वृत्तिन्यासयोर्निर्देशार्थत्वेन व्याख्यातत्वात् । यद्येवमिणकोः [८, ३, ५७] इत्यत्र कथं न्यासकारेण दास्यतीत्यत्र आकारऋकारयोर्न्यूनाधिकगुणयोः सावर्ण्यात् षत्वप्राप्तिमुक्त्वा वयस्यासु [४, ४, १२७] इति निर्देशाद् व्यवस्थोक्ता । तथाहि । ऋकारस्य विवृतत्वम् । आकारस्य विवृततमत्वम् । यदाह शिक्षाकारः । विवृतं करणमूष्मणां स्वराणां च, तेभ्य एङौ विवृततरौ, ताभ्यामप्यैऔ, ताभ्यामप्याकार इति । अत्राहुः । विवृतं करणमूष्मस्वराणामित्येकपदे कर्त्तव्ये यद्विवृतं करणमूष्मणां स्वराणां चेति पृथक् पदं कृतं ततः स्वराणामित्यस्यैवोत्तरत्र सूत्रे सम्बन्ध इति । तेन स्वरापेक्षमेवाकारस्य विवृततमत्वं नोष्मापेक्षमत आकारऋकारयोस्तुल्यप्रयत्नत्वाद् दास्यतीत्यत्र निर्देशात् षत्वाभावो युक्त एवाभिहितः । रक्षितेन तु इणकोः [८, ३, ५७] इत्यत्र न्यूनाधिकगुणस्यापि सावर्ण्यमुक्तम् । ननु दास्यतीत्यादावाकारऋकारयोरज्झल्त्वान्नाज्झलौ [१, १, १०] इति सावर्ण्यप्रतिषेधादेव मूर्द्धन्यो नास्ति तत्किमिति निर्देशेन व्यवस्थोच्यते । उच्यते । नाज्झलौ [१, १, ११०] इत्यगृहीतसवर्णानां प्रतिषेधो वक्तव्य इति वचनात् । आकारस्तु गृहीतसवर्णः । तत्कृतो ऽत्र प्रतिषेधः । ननु किमर्थमगृहीतसवर्णानां प्रतिषेध उच्यते न सामान्येनैव प्रतिषेधोऽस्तु तेन दास्यतीत्यादौ सावर्ण्याभावो नाज्झलौ [१,१,१०] इति निषेधादेव सिध्यति । तथा खट्वा ऋश्यः कुमारी शेते इत्यादावकः सवर्णे [६, १, १०१] दी-

र्णत्वाभावार्थमचीत्यनुवर्त्तनीयं न भवति । उच्यते । यदि गृहीतसवर्णानामपि नाज्झलौ [१,१,१०] इति प्रतिषेधः स्यात् तदा निंस्स इत्यत्र झरो झरि सवर्णे [८, ४, ६४] इति पचे सकारलोपो नस्यात् । ळ्कारेणापि सवर्णस्य सकारस्य ग्रहणात् तस्याच्त्वं ळ्त्युपदेशाद्दलत्वमङ्मलोर्नाज्झलौ [१, १, १०] इति प्रतिषेधात् । न च ळ्कारसकारयोर्नाज्झलौ [१, १, १०] इति सवर्णसंज्ञानिषेधः शक्यते कर्त्तुम् । आत्मनि क्रियाविरोधात् । तथाहि । ळ्कारसकारयोर्नाज्झलौ [१, १, १०] इति प्रतिषेधेन सकारस्याच्त्वाभावात् । ळ्कारसकारयोर्नाज्झलौ [१, १, १०] इति निषेधो नोपपद्यते । एवं चात्मन एव आत्मना प्रतिषेधः छ्तः स्यादिति । अगृहीतसवर्णानां प्रतिषेधस्य नाज्झलौ [१, १, १०] इत्यत्र सवर्णसंज्ञाप्रतिषेधवाक्ये सवर्णसंज्ञाया अनभिनिर्वृत्तत्वेन ग्रहणकशास्त्रस्यानभिनिर्वृत्तत्वात् । एवं ह्युक्तं पूर्वं ह्यपवादाः प्रवर्त्तन्ते पश्चादुत्सर्गा इति ॥ १७ ॥

## प्रकृतिवदनुकरणं भवति ॥ १८ ॥

तेन कश्चिदाह द्विः पठतीति । तमन्योऽनुकरोति द्विः पठतीत्याहेति । तत्र प्रकृतिवद्भावात्पदत्वे तिङ्ङतिङ [८, १, २८] इति निघातः सिद्धो भवति । पदत्वाभावे स न स्यात् । तथा वृपण्वस्वश्वयोरित्यत्र नलोपाभावणत्वे भवतः ॥

ज्ञापकं चात्र परिव्यवेभ्यः क्रिय [१, ३, १८] इत्यादौ निर्देशे क्रीत्यादेरनुकरणशब्दस्य विभक्त्युत्पत्त्यर्थं प्रातिपदिकसंज्ञाभ्युपगमेऽपि धातुत्वाश्रयस्येयङादेशस्य करणम् ॥

यद्येवं कथं विपराभ्यां जेः [१, ३, १९] इत्यादिनिर्देशः । न

धात्र विद्यमानोऽपीयङादेशः परत्वाद् घेर्ङिति [७, ३, १११] इति गुणेन बाध्यते इति शक्यते वक्तुम्। श्रिय [८, २, ४६] इति निर्देशात्परमपि गुणं बाधित्वा इयङेव भवति पूर्वविप्रतिषेधेनेति रक्षितेन व्याख्यातत्वात्। एवं च श्रियो दीर्घात् [८, २, ४६] इत्यत्र दीर्घग्रहणमुपपद्यते। अन्यथा हि श्रिय [८, २, ४६] इतीयङा निर्देशादेव दीर्घपरिग्रहे सिद्धे दीर्घग्रहणमनर्थकं स्यात्। उच्यते। द्विविधमनुकरणम्। सार्थकस्य निरर्थकस्य च शब्दमात्रस्य। तदेवं क्रिय [१, ३, १८] इत्यादौ सार्थकस्यैव लब्धधातुव्यपदेशस्य क्रीत्यस्यानुकरणम्। तत्र धातुकार्यस्येयङो विद्यमानत्वादनुकरणेऽपि तद्भवति। विपराभ्यां जेः [१, ३, १९] इत्यादौ निरर्थकस्य वर्णसमुदायमात्रस्यानुकरणं तत्र च क्रियारूपस्यार्थस्याभावाद्धातुसंज्ञैव नास्ति। एवं चानुकार्ये एव धातुसंज्ञाया अभावादियङादेशो नास्ति तदनुकरणे का पुनः कथा। तदेवं द्विविधमनुकरणमियङः करणाकरणाभ्यामवधार्यते। अत एव पठन्ति। सार्थकानुकरणे प्रकृतिवदनुकरणं भवतीति। ननु यदि जेरिति निरर्थकस्यानुकरणं कथं तर्हि जयतेर्धातोरात्मने पदं बोध्यते। उच्यते। सामान्यस्य विशेषग्राहितया धातोरपि प्रतिपादनात्। ननु यदि प्रकृतिवद्भावाद् धातुकार्यमियङ् तदाऽधातुरिति प्रातिपदिकसंज्ञाप्रतिषेधः प्राप्नोति। उच्यते। अधातुरिति नायं प्रसज्यप्रतिषेधो धातोर्न भवतीति किं तर्हि पर्युदासः। धातोरन्यत्र भवतीति। क्रीप्रभृतयस्तु शब्दा अनुकरणत्वेनाधातवः प्रकृतिवत्तया च धातव इति धात्वधातुत्वाद्धातोरन्य एव भवन्ति। तथा च श्रियो दीर्घात् [८, २, ४९]

इत्यत्र स्त्रियः स्वाश्रया प्रातिपदिकसंज्ञा भविष्यतीति न्यासे व्याख्यानम् । अथ वा पर्युदासेऽधातुरिति नेदं शास्त्रीयं कार्यमतस्तत्कर्त्तव्यतायां न प्रकृतिवदित्यतिदेशः । पर्युदासे नञित्येतच्चार्थवदधातुरप्रत्ययः प्रातिपदिकम् [१, २, ४५] इत्यत्र स्त्रियो दीर्घात् [८, २, ४६] इत्यत्र च रक्षितेनोक्तम् । नन्वेवमप्यनर्थकत्वादनुकरणशब्दस्य प्रातिपदिकसंज्ञा न प्राप्नोति । न चानुकार्य एवार्थः । भेदाभावात् । भेदे हि सति वाच्यवाचकसंबन्धः । न चानुकरणशब्दस्यानुकार्यशब्दात्कोपि भेदोऽवधार्यते । तथापि बौद्धो भेदः स्यात् । एवमपि अनुकार्यस्य वाच्यस्य शब्दात्मकत्वादनुकरणस्य वाचकस्य न तदभिधेयत्वमुपपद्यते । न हि शब्दस्य शब्दान्तरं वाच्यं किं तर्ह्यर्थ एव । नैतदस्ति । शब्दोऽपि शब्दस्य वाच्यो दृश्यते । यथा भूवादिशब्दो धातुशब्दस्येति । ननु युक्तं तत् । आचार्येण संज्ञाविधानात् । एवं तर्हि अनुकरणमप्यनुकार्यस्य वाचकं युक्तम् । आचार्यस्य तथा व्यवहारात् । वाच्यवाचकभावे व्यवहार एव हि निबन्धनम् । नन्वेवमपि सत्यप्यर्थवत्त्वेऽनुकरणाद्विभक्तिर्न प्राप्नोति संख्यायां सा विधीयते । न चानुकार्येषु शब्देषु द्रव्यसमवायिनी संख्या संभवति । तेषां शब्दात्मकत्वेनांवरगुणत्वे सत्यद्रव्यत्वात् । संख्यापि गुण एवेति न तत्रासावस्ति । निर्गुणा गुणा इति वचनात् । उच्यते शब्दस्येदं तदिति सर्वनामपरामर्शयोग्यत्वाद् द्रव्यत्वमिष्यते । तस्मात्सिद्धानुकरणशब्दाद्विभक्तिः ॥ १८ ॥

## विकरणेभ्यो नियमो बलीयान् ॥ १९ ॥

शबादिविकरणात् प्रागनुदात्तङित आत्मने पदम् [१, ३,

१२] इत्यादीनि नियमशास्त्राणि तावद्भवन्ति ततो विकरणाः ।
तेन नेर्विशः [१, ३, १७] इत्यादौ वृत्तौ यदुक्तमडागमस्तद्भक्तस्तद्ग्र-
हणेन गृह्यत इति तदुपपन्नं भवति । तथाहि । विकरणान्नित्या-
त् परस्मादपि नियमः कर्त्तव्यः । नियमकाले च तदैवाड़ागमः
प्राप्नोति नासावड़ागमो नियमेनापसार्यते विकरणादेव नियम-
स्य बलीयस्त्वात् । नापि विकरणेनापसारयितुं शक्यते नियमप्र-
वृत्तिकाले तस्याविद्यमानत्वात् । तदेवं नियमाड़ागमयोर्युगप-
त्प्राप्तौ परत्वादड़ागमस्ततो युक्तमुक्तमड़ागमस्तद्भक्तस्तद्ग्रहणे-
न गृह्यत इति । ननु च नियमेन प्रवर्त्तमानेन विकरणो बाध्येत
तद्बाधकाड़ागमप्रवृत्तिकाले विकरणो नित्योऽड़ागमात् प्राक्
कस्मान्न भवति । उच्यते । यदि विकरणोऽड़ागमं बाधेत ततो
निष्प्रतिद्वन्द्वी किमिति नियमो विकरणं न बाधेतेति । तथा
एधिष्यते ऐधिष्टेत्यत्रानुदात्तङित [१, ३, १२] आत्मनेपदमेव
भवति न परस्मैपदमिति । अन्यथा परत्वान्नित्यत्वाच्च विकरणे-
षु कृतेषु स्यादिषु तैर्व्यवधानादनुदात्तङिच्छ एवात्मनेपदं शे-
षादेव परस्मैपदमिति नियमो न स्यात् । एवं च सामान्येन ति-
बादयः स्युः । नियमस्त्वास्ते शेते इत्यादिषु कृतार्थः । यद्येवं स्या-
दीनां लावस्थायामुत्पत्तिर्न प्राप्नोति । लादेशे तु कृते एधिष्यते
इत्यत्र द्वयं प्राप्नोति यक् प्रत्ययः स्यप्रत्ययश्च तत्र परत्वाद्यकै-
व भाव्यम् । उच्यते । कर्तृवाचिनि सार्वधातुके शपि प्राप्ते भाव-
कर्मणोस्तु यकि स्यादयो विधीयमानाः सामान्येन सर्वेषामप-
वादत्वाद्बाधका भवन्ति ॥

अयं चार्थो वृद्भ्यः स्यसनोः [१, ३, ९२] इत्यत्र परस्मैपदविधा-

नेन ज्ञापितः अन्यथा वृतु वर्त्तन इत्येवमादीनां स्येन व्यवधानादनुदात्तङित आत्मनेपदम् [१, ३, १२] इति नियमो नास्तीति सामान्यविहितेषु तिबादिषु सिद्धमुभयं वर्त्स्यति वर्त्तिष्यते इति किमनेन विधानेन। तत्कृतमस्यार्थस्य ज्ञापकम्।

अन्ये त्वस्माज् ज्ञापकात् कृते ऽपि विकरणे नियमः प्रवर्त्तत इति परिभाषामाहुः। अस्मिन् दर्शने एधिष्यत इत्यत्र स्यावस्थायामेवान्तरङ्गत्वात्स्यप्रत्ययेन भवितव्यम्। तथाऽस्मिन्नेव दर्शने औप्यत औह्यत इत्यत्राजादित्वादाडजादीनाम् [६, ४, ७२] इत्याड् भवति। अन्यथा हि विकरणान्नियमस्य बलीयस्त्वे नियमाडागमयोः संप्रधारणायां परत्वादडागमेन भवितव्यम्। न चाडागमप्रवृत्तिकाले नित्यो विकरणः शक्यते प्रवर्त्तयितुम्। पूर्वमेव नियमेनापसारितत्वात्। आडागमस्तु नियमेन नापसार्यत इति परत्वादसौ बाधकः प्राप्नोत्येव। तदेवं हलादित्वादडागमे कृते आटश्च [६, १, ९०] इति वृद्ध्यभावादौप्यत इत्येवमादि न सिध्यति। तथा ऽस्मिन्नेव दर्शने च्छेरनादेशस्य ग्रहणम्। सत्यादेशस्य चर्त्तीत्येव सिद्धेरिति समो गम्यादि [१, ३, २९] सूत्रे वृत्तिग्रन्थ उपपद्यते। न हि विकरणान्नियमबलीयस्त्वे शिति विकरणे विधीयमान च्छादेश आत्मनेपदात्प्रागेव भवति। तथाऽस्मिन्नेव दर्शने नेर्गदादि [८, ४, १७] सूत्रे विकरणान्तस्याडागम उक्तः। अन्यथा विकरणान्नियमबलीयस्त्वे ततोऽपि परत्वादडागमे कृते कथं विकरणान्तस्याडागम उपपद्यते।

अथ विकरणेभ्य इत्यत्र निर्देशे भ्यसः सकारस्य रुत्वे कृते रोरुकारस्योपदेशेऽजनुनासिक इत् [१, ३, २] इतीत्संज्ञा न

प्राप्नोति पूर्वत्रासिद्धम् [८, २, १] इत्यसिद्धत्वात्। उच्यते। रो-
रुकारस्यानुनासिकप्रतिज्ञानसामर्थ्यादसिद्धत्वं न भवति। तथा
चोपदेशेऽजनुनासिक [१, ३, २,] इत्यत्र रक्षितः। इत्संज्ञायाम-
सिद्धत्वं नास्ति ससजुषो रुः [८, २, ६६] इत्यत्रोकारस्येत्संज्ञा-
र्थमनुनासिकत्वप्रतिज्ञानसामर्थ्यादिति । अत्रोच्यते। हशि च
[६, १, ११४] इत्यत्रानुनासिकविशिष्टस्य रोर्ग्रहणं यथा स्यादि-
त्येवमर्थं रोरुकारस्यानुनासिकत्वप्रतिज्ञानं स्यात्। तेन तरुव-
नमित्यत्र हशि च [६, १, ११४] इत्युत्वं न भवति। तस्कृतस्त-
त्सामर्थ्यादित्संज्ञाऽभिधीयते । न च वाच्यं कृत्रिमाकृत्रिम-
न्यायेन ससजुषो रुः [८, २, ६६] इत्यस्यैवोत्वेन भवितव्यम्।
न तरुवनादौ। कृत्रिमाकृत्रिमयोरुभयोर्हि संभवे कृत्रिमप-
रिभाषाप्रवृत्तेः। तथाहि। उत्वशास्त्रे ससजुषो रुः [८, २, ६६]
इत्यस्यासिद्धत्वात्तरुवनस्यैव सम्भवो नेतरस्य। एवं तर्हि रेफ-
स्यैवानुनासिकत्वं प्रतिज्ञायतां स्वरितत्वप्रतिज्ञानवत् । तथा
चोत्वविधावनुनासिकविशिष्टस्य रेफस्योत्वे विधीयमाने पुन-
र्भवादौ कथमुत्वप्राप्तिः। तदेवं रेफस्यानुनासिकत्वे प्रतिज्ञात-
व्ये यदुकारस्य प्रतिज्ञानं तत्सामर्थ्यादित्संज्ञा भविष्यति। एत-
दपि न। एवं स्थित एव शास्त्रे रोरुकारमकृत्वैव पुनरनन्तरो-
क्तप्रकारेणेष्टसिद्धेरुकारोऽनुबन्धो व्यर्थः स्यात् । एवं तर्हि व्य-
क्तिपदार्थाश्रयणेन सामर्थ्यम्। एतच्च ससजुषो रुः [८, २, ६६]
इत्यत्रोकारस्येत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञातमिति वदता मै-
त्रेयेण प्रतिपादितम्। अन्यः पुनराह । अनुनासिकविशिष्टस्य
यद्रोरुत्वं तदप्यसिद्धबाधनमन्तरेण न सम्भवति। तथेत्संज्ञापि।

तत्र यथाऽसिद्धत्वं बाधित्वानुनासिकप्रतिज्ञानमुत्त्वं प्रवर्त्तयति तथेत्संज्ञामपि प्रवर्त्तयति । न चोक्तमाश्रयात्सिद्धमिति वचनात्प्रवर्त्तते । विपक्षे प्रमाणाभावात् ॥ १९ ॥

इति परिभाषावृत्तौ भूपादः ॥ ३ ॥

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ २० ॥

पुनःप्रसङ्गविज्ञानात्सिद्धम् ॥ २१ ॥

वचनद्वयमिदं विप्रतिषेध [१, ४, २] सूत्रे व्यक्तिजातिपक्षयोः फलभूतं परिभाषारूपेण पठ्यते । तथाहि । व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणस्य व्यापारभेदात्पर्यायेण द्वावपि विधी प्राप्तौ । यथा देवदत्तयज्ञदत्ताभ्यामेकत्र भाजने क्रमेण भुज्यते । तत्र विप्रतिषेधे परम् [१, ४, २] इत्यनेन विप्रतिषेधविषयो नियम्यते । विप्रतिषेधे परमेव न पूर्वमिति । न चैतेन पूर्ववाक्यानर्थक्यम् । विप्रतिषेधसूत्रेण [१, ४, २] तस्यासत्त्वाख्यापनात् । तदिदमुच्यते । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । तस्यायमर्थः । सकृदेकवारं यद्बाधितंतद्बाधितमेवेति । गतौ विप्रतिषेधे । तेनाज्जसेरसुक् [७, १, ५०] इत्यनेन परत्वादसुकि कृते पुनः शीभावो न भवति । ये पूर्वास इति । तथा स्तात् त्वमित्यत्र तातङः स्थानिवत्त्वाद्द्विभावो न भवति । घ्वसोरेद्धावभ्यासलोपश्च [६, ४, ११९] इति सस्यैत्त्वं च । एतच्च स्थानिवत् [१, १, ५६] सूत्रे भाष्ये व्याख्यातम् ।

जातौ तु पदार्थे सकृदेकवारं लक्षणं प्रवर्त्तते । विषयान्तरे चोभयं चरितार्थमिति विप्रतिषेधविषयेऽप्रवृत्तिरेवोभयोः प्राप्तो-

ति । यथोभयोस्तुल्यबलयोरेकः प्रेष्यो विरोधादेकस्यापि कार्ये न प्रवर्त्तते । तत्र विप्रतिषेधे परं कार्यम् [१, ४, २] इत्यस्य परविधौ व्यापारात्पूर्वनिवृत्ताव्यापार इति । ननु पूर्ववाक्यस्य प्रागेवोक्ता निवृत्तिस्तत्कथमिदानीं तद्विधानम् । उच्यते । युगपद्विरोधादप्रवृत्तिरित्युक्तम् । परत्वात्परविधौ कृते विरोधाभावाद्युक्त एव पूर्वविधिः । तदिदमुच्यते । पुनःप्रसङ्गविज्ञानात्सिद्धमिति ।

तेन भिन्द्धकीत्यत्र परत्वाद्विभावे कृते पुनरकच् क्रियते । ईजतुरित्यत्र परत्वात्संप्रसारणे कृते पुनर्द्विर्वचनम् ।

यत्र पूर्वेण प्रवर्त्तमानेन परस्य बाधा तत्र सकृद्गतिपरिभाषा । यत्र तु पूर्वं प्रवर्त्तमानं परं न बाधते तत्र पुनःप्रसङ्गविज्ञानात्सिद्धमिति केषां चिन्मतम् । तदयुक्तम् । एवं ह्यची इत्यत्र परत्वादौ च द्विवचने [७, १, ७७] इतीकारे कृते पुनर्नुम् स्यादेव । तस्माद्व्यवस्थित्यैव ह्येतयोर्व्यवस्थेति ।

अथ पुनःप्रसङ्गविज्ञानादित्यत्र निर्द्देशे पुनःशब्दे पदत्वाश्रयः कथं विसर्जनीयः । यावतैकवाक्यतायां कर्मादीनामेकत्वादौ स्वादिभिर्भवितव्यम् । पुनःशब्दश्चाव्ययम् । अव्ययानि च लिङ्गसंख्यारहितानि । उच्यते । पञ्चकपक्षे सामान्येन स्वादिविधानम् । ततो बहुषु बहुवचनम् [१, ४, २१] इत्यनेन बह्वर्थेषु बहुवचनमेवेत्यर्थनियमेन प्रत्ययस्यानियतत्वादव्ययेभ्यः स्वादयो विद्यन्त एव । अथापि बह्वर्थेष्वेव बहुवचनमिति प्रत्ययनियमः । तथापि तुल्यजातीयापेक्षया नियमस्य यत्र संख्यास्ति संख्यान्तरं च व्यावर्त्यं तत्रैव नियमेन भवितव्यम् । एवं च संख्याश-

ब्देभ्यो देवदत्तयज्ञदत्ताविति द्वन्द्वसमासाच्च तथा वनस्याग्रेऽग्रेवणं प्राचीनं ग्रामादाम्रा इत्यत्रानभिधानात् सर्वसुबाद्यभावो वाच्यः। अत एव हि त्रिकपक्षेऽप्यनेकवाक्यतां स्वादि [४, १, २] सूत्रे वक्ष्यति न्यासकारः। बहुषु बहुवचनम् [१, ४, २१] इत्यनेनानेकवाक्यतापीह व्याख्यायत इति। अथ यदा त्रिक एकवाक्यतापक्षस्तदा कथं स्वादयः। कथं च न स्युः। एकत्वाद्यभावात्। यद्येवं वृक्षादिभ्योऽपि न प्राप्नुवन्ति तत्र यथा वृक्षादिभ्यो बहुषु बहुवचनम् [१, ४, २१] इत्यादिना स्वादिभिरविद्यमाना एव संख्यादयोऽभिधीयन्ते। तथाऽव्ययेभ्योऽप्यभिधास्यन्ते। नैतत्। प्रत्यासत्त्या प्रातिपदिकार्थ एव यत्र संख्यादयः प्रातिपदिकेनानुक्तास्तत्र स्वादिभिः संख्यादयोऽभिधीयन्ते नान्यत्र। यथा अजाद्यतष्टाप् [४, १, ४] इति स्त्रियामभिधेयायां विधीयमानष्टाब् वृक्षादिभ्यो न भवति। एवं तर्ह्यव्ययादाप्सुपः [२, ४, ८२] इति ज्ञापकात्संख्याकर्मादिरहितेभ्योऽव्ययेभ्योऽपि स्वादयो भवन्ति। तथा च बहुवचनमित्यत्र न्यासकृतोक्तम्। अव्ययादाप्सुपः [२, ४, ८२] इति ज्ञापकादव्ययेभ्यस्तु निस्संख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति। तत्र रक्षितेनोक्तम्। अव्ययादाप्सुपः [२, ४, ८२] इति ज्ञापकं व्यक्तौ। अस्यैव हि तस्य विषयः प्रलम्बते स्वरित्यादिरवकाशः। प्रलम्बते स्वरित्यत्र हि प्रलम्बनक्रियापेक्षया स्वःशब्दादवश्यमेवापादाने पञ्चम्या भवितव्यमतस्तस्या लुगर्थं सज् ज्ञापकं कथं स्यात्। तर्हि व्यक्तावलिङ्गसंख्यं यदव्ययं नीचैरित्यादि तदर्थं यत्कृतं तज् ज्ञापकम्। नन्वत्रापि प्रातिपदिकार्थ [२, ३, ४६] इत्यादिना

प्रातिपदिकार्थमात्रे विहितायाः प्रथमाया लुगर्थं स्यात् तत्कथं ज्ञापकम् । उच्यते । द्वितीयाद्यर्थं यत् कृतं तज् ज्ञापकम् । एतच्चासम्यक् । अव्ययाद् द्वितीयादिविधानस्य न किं चित्प्रयोजनम् । सपूर्वायाः प्रथमाया विभाषा [८, १, २६] इति विकल्पितत्तेमयादिविधिभावः प्रयोजनमिति चेत् । न । प्रथमाविधानपक्षे तेषामवश्यंभावात् । एवं तर्हि द्वितीयाद्यन्तानां द्वितीयादिसमासः प्रयोजनमिति चेत् । एतदपि न । यतः प्रत्यासत्त्या तत्र श्रितादिनिमित्ता द्वितीया समस्यते । एवं षष्ठीत्यादावपि सुप्सुपेत्यधिकारात्तन्निमित्ता विभक्तिर्ग्रहीतव्या । उच्यते । प्रातिपदिकार्थ [२, ३, ४६] सूत्रे ऽर्थग्रहणमनभिसंधाय ज्ञापकमिदम् । तदभिसंधाने ज्ञापकस्य प्रयोजनं नास्ति । अर्थग्रहणादेवाव्ययेभ्यः प्रथमायाः सिद्धत्वात् । अत एव प्रातिपदिकार्थ [२, ३, ४६] सूत्रे रक्षितः । अर्थग्रहणमलिङ्गार्थम् । तच्चाव्ययम् । अत एव संख्यारहितेभ्योपि प्रथमा सिद्धेत्यव्ययादाप्सुपः [२, ४, ८२] इति सूत्रं ज्ञापकं प्रपञ्चयतोक्तम् ॥ २१ ॥

अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत् ॥ २२ ॥

इयं परिभाषा विप्रतिषेध [१, ४, २] सूत्रे भाष्ये न्यासे च पठिता ।

तेन द्यौकामिः सैात्थितिरित्यादौ विभज्यान्वाख्यानपक्षे बहिरङ्गाया वृद्धेर्दीर्घान्त्यादन्तरङ्गौ यणेकादेशौ भवतः । तदेतदुदाहरणं दिङ्मात्रम् । समर्थानां प्रथमाद्वा [४, १, ८२] इत्यत्र समर्थग्रहणात्समर्थितसर्वकार्यात्तद्धितेन भवितव्यमित्येवं यणेकादेशयोः सिद्धत्वात् । इदं तूदाहरणं वृक्षइ इहेत्यादौ बहि-

रङ्गादकः सवर्णदीर्घादन्तरङ्गो गुणः । न चैतदमिद्वं बहिरङ्ग-मन्तरङ्ग इत्यनया परिभाषया सिध्यति । अचोरानन्तर्ये नाजानन्तर्ये बहिष्टप्रक्लृप्तिरिति तस्याः प्रतिषिद्धत्वात् । नन्वेवं कृतेऽप्यत्र सवर्णदीर्घत्वेऽचः परस्मिन्पूर्वविधौ [१, १, ५७] इति स्थानिवद्भावादाद्गुणेन सिद्धं वृक्ष इद्धेति । नैतदस्ति । एकादेशस्य पूर्वग्रहणेन ग्रहणात् पदान्तविधित्वेन स्थानिवत्त्वप्रतिषेधात् । परादिग्रहणं तु न वाच्यम् । परादित्वेन न पदान्तादि [१, १, ५८] सूत्राव्यापारस्यायुक्तत्वात् । नन्वन्तरङ्गपरिभाषापि न प्राप्नोति । नाजानन्तर्ये इति निषेधादेव । तथाहि । यथा असिद्धपरिभाषया षत्वतुकोरसिद्ध [६, १, ८६] इत्यस्यानर्थकत्वं तथान्तरङ्गपरिभाषयापि । उच्यते । नैवान्तरङ्गपरिभाषया षत्वतुकोरसिद्ध इत्यस्यानर्थक्यम् । यतस्तुकोऽन्तरङ्गत्वात्प्राप्तिः । दीर्घस्य नित्यत्वात् । तत्र परत्वाद्दीर्घ एव प्राप्नोति । यत्तूच्यते नित्यादप्यन्तरङ्गं बलीय इति तत्परत्वफलं न त्वपूर्वमिति । अथ वाऽस्त्वन्तरङ्गत्वात्तुक् । दीर्घत्वे कृते निमित्तापायपरिभाषया तन्निवृत्तिः स्यादेव । तदेवं बहिरङ्गपरिभाषयैवामर्थक्यं षत्वतुकोरसिद्धः [६, १, ८६] इत्यस्य । अतस्तस्या एव नाजानन्तर्ये इति प्रतिषेधः । किं च यद्यत्रान्तरङ्गपरिभाषायाः प्रतिषेधः स्यात्तदान्तरङ्गपरिभाषा निर्विषया स्यात् ।

इयं च परिभाषा बहिरङ्गपरिभाषयैव सर्वकार्यस्य सिद्धत्वाद् भागवृत्तिकृता नाभ्युपगम्यते । तन्मते वृक्ष इद्धेत्यादावचोरानन्तर्ये यद्यपि बहिरङ्गपरिभाषा नास्ति । तथापि पदसंस्कारपक्षे दोषप्रतिक्षेपो व्याख्येयः । यदाहुः । “सुविचार्य पद-

स्यार्थं वाक्यं गृह्णन्ति सूरय” इति। युक्तं चैतत् । अन्यथा वाक्यसंस्कारे वृक्षइ इहेत्यादौ शब्दपरविप्रतिषेधेनान्तरङ्गमाद्गुणं बाधित्वा सवर्णदीर्घत्वमेव स्यात्। यथा दिव उत् [६, १, १३१] इत्यत्र दिवोकमो देवा इत्यत्र उकारस्य यणादेशो रक्षितेनोक्तः । न चान्तरङ्गपरिभाषासामर्थ्याद् वृक्षइ इहेत्यादावाद्गुणेनैव भवितव्यम् । एवं हि दिवोकस इत्यत्रापि इकारस्य यणादेशः स्यात् ।

अथास्या उदाहरणान्तरं कश्चिदाह। ऋत्विय इति । अत्र घस्, तस्य इयादेशे कृते सिति च [१, ४, १६] इति पदसंज्ञान्तरङ्गत्वादजादौ विधीयमानां बहिरङ्गां यचि भम् [१, ४, १८] इति भसंज्ञां बाधते। समावेशस्तु नास्ति। एकसंज्ञाधिकारात्। एतच्चायुक्तम्। सिति च [१, ४, १६] इति सूत्रारम्भादेव भसंज्ञाबाधकत्वस्य सिद्धत्वात्। अत एवैतदर्थैकसंज्ञाधिकारस्य न घटते। तथाहि। स्वादिष्विति पदसंज्ञया यचि भम [ १, ४, १८] इति भसंज्ञायाः समावेशे सिद्धे सिति च [१, ४, १६] इति कृते यदि पुनः समावेशः स्यात्तदा सिति च [१,४,१६] इत्यनर्थकमेव स्यात्। अर्थैतत्स्यात्। यचि भम् [१,४, १८] इत्यत्रैकसंज्ञाधिकाराभ्युपगमाद् भपदसंज्ञयोः समावेशो नास्ति। एवं च सिति च [१,४, १६] इत्यत्रासत्येकसंज्ञाधिकारे ऋत्विय इत्यत्र भपदसंज्ञयोः समावेशः स्यादेव। नन्वेवमपि सिति च [१, ४, १६] इत्यनर्थकम्, तस्य ह्येतत्प्रयोजनम् । ऋत्विय इत्यत्र सित्त्वात्पदत्वेनौर्गुणो माभूदिति । भसंज्ञासमावेशे तु स्यादेवौर्गुणः [६, ४, १४६] इति। एवं चाकडारात् [१, ४, १] इत्यत्र यदेतद-

नुन्यासकारेणोक्तम्। अनवकाशायास्त्विदमुच्यते। अयं ते योनिर्ऋत्विय इत्यत्र पदसंज्ञा भसंज्ञां बाधत इति। तदयुक्तम्। नायुक्तम्। पदत्वस्यावग्रहार्थत्वात्॥ २२॥

उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्॥ २३॥

यत्र पञ्चमीनिर्देशोऽस्ति सप्तमीनिर्देशस्योपात्तोऽनुवृत्तो वा तत्र पञ्चमीनिर्देशस्य बलीयस्त्वात्तस्मादित्युत्तरस्य [१, १, ६७] इति प्रवर्त्तते।

तेनामि सर्वनाम्नः सुट् [७, १, ५२] इत्यत्रात इत्यनुवृत्तौ अवर्णान्तात्सर्वनाम्न इत्यनया पञ्चम्या आमीत्यस्याः सप्तम्याः षष्ठ्यां परिकल्पितायामाम एव सुडागमो भवति।

अयं च विप्रतिषेधे परं कार्यम् [१, ४, २] इत्यस्यार्थः परिभाषारूपेण पठ्यते। तथाहि। तस्मिन्निति निर्दिष्टे पूर्वस्य [१, १, ६६] इति सप्तमीनिर्देश इको यणचि [६, १, ७७] इति दध्यत्र मध्वत्रेत्यत्र सावकाशः। तस्मादित्युत्तरस्य [१, १, ६७] इति पञ्चमीनिर्देशो रषाभ्यां नो णः [८, ४, १] इत्यत्र कृतार्थः। आस्तीर्णमिति। यत्र तु सप्तमीनिर्देशः पञ्चमीनिर्देशस्योभयं कृतार्थं तत्रोभयप्राप्तौ परत्वात्तस्मादित्युत्तरस्य [१, १, ६७] इति प्रवर्त्तते। तथाहि। आमि सर्वनाम्नः सुट् [७, १, ५२] इत्यत्रात इति पञ्चमी आज्जसेरसुक् [७, १, ५०] इत्यत्रासुग्विधौ कृतार्था। अमीति सप्तमी चेत्वय [७, १, ५३] इत्यत्र कृतार्था। उभयोस्तुल्यबलयोर्विरोधे परत्वात्पञ्चमी सप्तम्याः षष्ठीत्वं कल्पयति। यत्र त्वनवकाशा सप्तमी तत्र सप्तमीनिर्देश एव पञ्चम्याः षष्ठीत्वं कल्पयति। यथाऽऽने मुक् [७, २, ८२] इत्यत्राऽऽन

इति सप्तमी निरवकाशातो येयः [७, २, ८०] इत्यत्रात इति कृतार्थायाः पञ्चम्याः षष्ठीत्वं कल्पयति । तत्स्थाने परतोऽकारान्तस्यैवाङ्गस्य मुग् भवति । यद्येवं ङः सि धुट् [८, ३, २९] इत्यत्र कथमनया सकारादेः परस्य धुडागमः । न हि सीत्यस्याः सप्तम्याः क्वापि कृतार्थत्वम् । उच्यते । यथा सीत्यस्याः सप्तम्या अनवकाशत्वं तथा ङ इत्यस्या अपि पञ्चम्याः । एवं चोभयोरनवकाशयोर्युक्तमेव परत्वम् । न च युगपदन्योन्यषष्ठीकल्पना शङ्क्या, नापि क्रमेण । एकः पूर्वपरयोः [६, १, ८४] इत्यत्र पूर्वपरग्रहणात् । तदुक्तम् । न च युगपदुभये प्रकल्पिके पूर्वपरग्रहणादिति । न चैवं सप्तमीनिर्देशस्यानर्थक्यम् । लाघवार्थत्वात् । स इति निर्देशे गौरवं स्यादिति । एतच्च ङः सि धुट् [८, ३, २९] इत्यत्र न्यासे उक्तम् । इह तु दीर्घात्पदान्ताद्वा [६, १, ७६] इत्यत्र यद्यपि छ इति सप्तमी कृतार्था, तथापि तस्याः स्वरितासङ्गादिहानुवृत्ताया निरवकाशत्वाद्दीर्घादित्यस्याः पञ्चम्याः षष्ठीत्वं प्रकल्पयति । पञ्चमी तु पौर्वापर्यं प्रकल्प्य सावकाशा निवर्त्तते । तेनायमर्थो भवति । दीर्घादुत्तरो यश्छकारस्तस्मिन्परतः पूर्वस्यैव दीर्घस्य तुग्भवति तत्रास्या न व्यापार इति तस्मादित्युत्तरस्य [१, १, ६७] इत्यत्र न्यासः । दीर्घात् [६, १, ७५] इत्यत्र तु न्यासकृता तस्मादित्युत्तरस्येत्यत्र तस्मादिति योगविभागः कर्त्तव्यः । पूर्वसूत्रात्पूर्वस्येत्यनुवर्त्तते । तेन दीर्घात् [६, १, ७५] इत्यादौ सत्यपि पञ्चमीनिर्देशे पूर्वस्यैव कार्यं भवतीत्युक्तम् ॥ २३ ॥

सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ २४ ॥

तेन धुरि दक्षिणायामित्यत्रार्थे सप्तम्या विकल्पितत्वाच्छेषे षष्ठीविधानाद्धुरि दक्षिणाया इति सिध्यति । तथा ये यूपाय तक्षतीत्यत्र तक्षतीति बहुत्वे एकवचनम् ।

अयं चार्थः षष्ठीयुक्तश्छन्दसि वा [१, ४, ९] इत्यत्र योगविभागेन साधितः । इयं च परिभाषा व्यत्ययो बहुलमित्यस्यैव प्रपञ्चः ॥ २४ ॥

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २५ ॥

प्रत्यये गृह्यमाणे यस्मादसौ विहितस्तदादेरेव भागस्य तत्प्रत्ययान्तस्य च ग्रहणं भवति ।

प्रयोजनं धातुप्रत्ययप्रातिपदिकतद्धितादयः । सनाद्यन्ता धातवः [३, १, ३२] इति यस्मात्सन् विहितस्तदादेस्तदन्तस्यैव धातुसंज्ञा । चिकीर्षतीति । न संघातस्य । प्राचिकीर्षदिति । कृत्तद्धितसमासाश्च [१, २, ४६] इति कृत्तद्धितान्तस्य प्रातिपदिकसंज्ञा तदादेस्तदन्तस्यैव । कारको गार्ग्य इति । न संघातस्य । विप्रः कारको विप्रो गार्ग्य इति । सुप आत्मनः क्यच् [३, १, ८] । पुत्रमिच्छति पुत्रीयति । संघातान्न भवति । महान्तम्पुत्रमिच्छतीति । तद्धितविधौ यञिञोश्च [४, १, १०१] इति प्रत्यययोर्ग्रहणं यतस्तौ विहितौ तदादेरेव फक् प्रत्ययो भवति । गार्ग्यायण इति । संघातान्न भवति । विप्रो गार्ग्यायण इति । सुप्सुपा [२, १, ४] इति समासो न संघातस्य । ऋद्धस्य राज्ञः पुरुष इति ।

स चायमर्थो यस्मात्प्रत्ययविधि [१, ४, १३] सूत्रे योगविभागेन साधितः । तथाहि । यस्मात्प्रत्ययविधिस्तदादि प्रत्यये इति

विगृह्यते । गृह्यमाणे इति चाध्याहर्त्तव्यम् । प्रत्यये गृह्यमाणे यस्मात्स विहितस्तदादिरेव गृह्यते न तु प्रत्ययान्तः संघात इति ।

अत एवाङ्गपादे यस्मादादि [१, ४, १३] सूत्रं कृत्वा अङ्गस्य [६, ४, १] इति सूत्रं न खण्ड्यते । ननु तत्रापि योगविभागेन परिभाषा सिध्यति । सत्यं सिध्यति । किं तु न स्त्रीप्रत्यये चानुपसर्जने इति द्वितीया न सिध्यति । तथाहि । अत्र कृते नेयङुवङ्स्थानावस्त्री [१, ४, ४] इत्यतोऽस्त्रीग्रहणमनुवर्त्तते । तत्रानुवृत्तिसामर्थ्यात्स्त्रीप्रत्ययस्य ग्रहणम् । प्रधाने च कार्यसंप्रत्ययान्न स्त्रीप्रत्यये चानुपसर्जने इति लभ्यते । तर्हि प्रकरणमेवेदमङ्गपादे क्रियताम् । नचैवमतत्तदित्यत्र लघुसंज्ञागुरुसंज्ञयोः समावेशः स्यादिति वाच्यम् । लघुसंज्ञाप्रणयनवैयर्थ्यप्रसङ्गात् । अन्यथा लघुप्रदेशे ह्रस्वग्रहणमेव कुर्यात् । उच्यते । यस्मादादिसूत्रात्तदादिग्रहणं सुप्तिङन्तं पदम् [१, ४, १४] इत्यत्रानुवर्त्तते । तदर्थमिह प्रकरणम् । तेन द्विः प्रयोगो द्विर्वचनमिति पक्षे तदादिग्रहणात् पचसिपचसि इति समुदायस्य सुप्तिङन्तं पदम् [१, ४, १४] इति पदसंज्ञा सिध्यति । तथाहि । अर्थरूपयोः साम्यात् स एव पचशब्दः स एव तिङ् यः पूर्वस्माद्विहितः स एव परस्मादपि विहितः यः परस्मादपिविहितः स पूर्वस्मादपीति तदादिग्रहणात् समुदायस्य पदत्वम् । तस्य च पदत्वे आँ-पचसिपचसि देवदत्ता३ इत्यत्राम एकान्तरमामन्त्रितमनन्तिके [८, १, ५५] इत्येकान्तरता सिद्धा भवति । एतच्च सर्वस्य द्वे [८, १, १] इत्यत्र भाष्यव्याख्यानं रक्षितेनोक्तम् । अत्रोच्यते ।

नन्वेकैकस्मादप्यत्र तिङ् विहितस्ततोनेकं पदम् । उच्यते । समुदायेन वाक्यपरिसमाप्तिरिति समुदायस्य पदत्वम् । यथा समुदायस्यावयवानां चैकाच्त्वे समुदायस्य द्विर्वचनं भवति नावयवानां पपाचेति । तथेहापि समुदायस्य पदत्वम् । एवं हि समुदायशास्त्रमनुगृहीतं भवति । अवयवयोस्तु पदसंज्ञायां समुदायस्य त्यागात्तद्विषयं शास्त्रं हीनं स्यात् । तदादिग्रहणानुवृत्तिरप्यपार्था स्यात् । अत्र तु पक्षे अन्योऽन्यो दुःखोत्यादौ प्रत्येकं पदत्वाभावे पदकार्यं न स्यात् । तदर्थं प्रत्येकं वाक्यपरिसमाप्त्या तत्र पदत्वे पदकार्यमनुसन्धेयम् ।

अन्यस्त्वाह गौरीभ्यामित्यत्र गुरुसंज्ञायां गुरोरनृत [८, २, ८६] इति प्लुतः स्यात् । स्थिते त्वेकसंज्ञाधिकारे नदीसंज्ञैवापवादत्वान्न गुरुसंज्ञेति । ननु स्थितेप्येकसंज्ञाधिकारे गुरुसंज्ञानदीसंज्ञयोर्बाध्यबाधकभावो नास्ति । भिन्नविषयत्वात् । तथाहि । गुरुसंज्ञा वर्णमात्रस्य नदीसंज्ञा स्त्रीकारान्तस्य । उच्यते । वर्णमात्रस्यैव केषां चिन्मते नदीसंज्ञा । न चास्मिन् पक्षे लक्ष्मीप्रभृतिषु स्त्रीत्वाभावान्नदीसंज्ञा न प्राप्नोतीति वाच्यम् । यत्समुदायगतं स्त्रीत्वमवयवे समारोप्य नदीसंज्ञाविधानात् । ज्ञापकं चात्र नेयङुवङ्स्थानावस्त्री [१, ४, ४] इति प्रतिषेधः । तथा चाच्छीनद्योर्नुम् [७, १, ८०] इत्यत्र शीनद्योः परत इति वृत्तावुक्तं तदेवं वर्णपक्षे दोषः । तस्माद्यथान्यासमेवास्तु । एतत्त्वनागमम् ॥ २५ ॥

न स्त्रीप्रत्यये चानुपसर्जने ॥ २६ ॥

येयं प्रत्ययग्रहणपरिभाषा सा स्त्रीप्रत्यये ऽनुपसर्जने ग्राहि-

का न भवति ।

तेन स्त्र्यधिकारप्रत्ययग्रहणे संघातोऽपि गृह्यते । न तु यतः स्त्रीप्रत्ययस्तदादिरेवेति वाक्यार्थः । तेन स्त्रीभ्यो ढक् [४, १, १२०] इति यतोऽण् तदन्तात्कारशब्दात् ङीप् । न तदादेस्तदन्तादेव ढक् प्रत्ययः । अपि तु समुदायादेव कौम्भकारेय इति । अन्यथा हि अवयवस्य वृद्धिस्वरौ स्याताम् । नन्वणन्तात् ङीब् विधीयमानः कृद्ग्रहणपरिभाषया कुम्भकारशब्दादेव भविष्यति । उच्यते । टिड्ढाणञ् [४, १, १५] इत्यत्राणिति न कृद्ग्रहणम् । अपि तु कृदकृद्ग्रहणम् । ननु प्रत्ययग्रहणपरिभाषाया अभावाद्यथा स्त्रीप्रत्ययान्ताड् ढग्विधीयमानः कुम्भकारीत्यस्मात्समुदायशब्दाद्भवति तथा कारशब्दादपि क्व चित्स्यात् । नैतत् । प्राधान्यात्समुदायादेव प्रवृत्तेः ।

तथा ष्यङः संप्रसारणम् [६, १, १३] इत्यत्र ष्यङः स्त्र्यधिकारे विधानात् स्त्रीत्वं, स्थानिवद्भावेन प्रत्ययत्वम् । अतस्तद्ग्रहणे प्रत्ययग्रहणपरिभाषाया निषेधात् ष्यङ्मात्रस्य संप्रसारणं परमकारीषगन्धीपुत्र इति ।

अनुपसर्जन इति प्रतिषेधादुपसर्जने स्त्रीप्रत्यये प्रत्ययग्रहणपरिभाषा प्रवर्त्तत एव । तेनातिकारीषगन्ध्यपुत्रोऽतिकारीषगन्ध्यपतिरित्यत्र संप्रसारणं न भवति ।

नन्वेवमपि प्रधाने कार्यसंप्रत्ययात्प्रधानप्रत्ययग्रहण एव प्रत्ययग्रहणपरिभाषया भवितव्यम् । एवं चातिकारीषगन्ध्यपुत्र इत्यत्र संप्रसारणं स्यादेव । उच्यते । यद्यत्र संप्रसारणं स्यात्तदानुपसर्जन इति प्रतिषेधोऽनर्थकः स्यात् ।

नन्वेवमप्यर्धपिप्पलीत्यत्रापि प्रत्ययग्रहणपरिभाषया हल्ड्यादिना [६, १, ६८] सुलोपो न प्राप्नोति। स्त्रीप्रत्ययान्तस्योपसर्जनत्वात्। उच्यते । एकविभक्ति चापूर्वनिपात [१, २, ४४] इत्यत्रानुवृत्तविभाषाग्रहणस्य व्यवस्थितविभाषाविज्ञानादुपसर्जनसंज्ञाया अभावः कृतः। अतो न स्त्रीप्रत्यय इति तदादितदन्तनियमनिषेधो भवत्येव । ननु शास्त्रीयोपसर्जनसंज्ञा माभूत्। लौकिकं यदुपसर्जनं तस्मिन्सति न स्त्रीप्रत्यय इति प्रवर्त्तितुं नोत्सहते। अनुपसर्जन इति प्रतिषेधात्। ततश्च प्रत्ययग्रहणपरिभाषया तदादिनियमेन भवितव्यमेव। उपसर्जनग्रहणेन लौकिकमुपसर्जनं गृह्यत एव । तथाहि। पञ्चखट्वीत्यत्र समुदायिभ्यो ऽन्यः समुदाय इत्येतस्मिन्दर्शने शास्त्रीयोपसर्जनसंज्ञाभावेऽपि लौकिकमुपसर्जनमाश्रित्य गोस्त्रियोरुपसर्जनस्य [१, २, ४८] इति ह्रस्वमुक्त्वा द्विगोः [४, १, २१] इति ङीबुक्तः। उच्यते। एकविभक्ति चापूर्वनिपाते [१, २, ४८] इत्यत्रानुवृत्तविभाषाग्रहणस्य व्यवस्थितविभाषाविज्ञानाद् यथार्धपिप्पलीत्यत्र शास्त्रीयोपसर्जनाभावेन लौकिकोपसर्जनाश्रयं ह्रस्वत्वं न भवति। तथानुपसर्जन इति प्रतिषेधोऽपि न भवति। अथ वा हल्ड्यादि [६, १, ६८] सूत्रे दीर्घग्रहणात् क्व चिदुपसर्जनस्त्रीप्रत्ययेऽपि न स्त्रीप्रत्यये इत्येवात्र वर्त्तत इत्याहुः। तेनार्धपिप्पलीत्यत्र हल्ड्यादि [६, १, ६८] लोपः सिध्यति। ननु कथं ज्ञापकम्। यावता विपक्ष्ये हे अम्ब हे नदि इत्यत्र सुलोपो माभूदित्येवमर्थं दीर्घग्रहणं कर्त्तव्यम्। नन्वत्र भवितव्यमेवेङ्ह्रस्वात्संबुद्धेः [६, १, ६९] इति सुलोपेन। न च दीर्घग्रहणात्ते-

नापि न भवितव्यमिति वाच्यम्। अन्यथा हि हलङ्यादि [६, १, ६८] सूत्रे दीर्घग्रहणमेङ्ह्रस्वात् [६, १, ६९] इति सूत्रं चाकृत्वा ह्रस्वैङोरब्धापः संबुद्धेरिति कुर्यात्। अत एवेह हे अम्ब हे न-दि इत्यादौ सुलोपो न भविष्यतीति। नन्वेवमपि बदर्याः फलं विकार इति तस्य विकार [४, ३, १३४] इत्यर्थेऽनुदात्तादेश्च [४, ३, १४०] इत्यञः फले लुक् [४, ३, १६३] इति लुकि लुक् त-द्धितलुकि [१, २, ४९] इति ङीपोऽपि लुकि कृतेऽसति दीर्घ-ग्रहणे प्रत्ययग्रहणेन बदरमित्यत्र सुलोपः स्यात् स माभूदिति सार्थकं दीर्घग्रहणम्। उच्यते। परत्वादिह नपुंसकादमा सु-लोपो बाधनीयः। व्यक्तिपदार्थाश्रयणादुक्तमिति वा ॥ २६ ॥

संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति ॥ २७ ॥

तेन तरप्तमपौ घः [१, १, २२] इति तरम्मात्रस्य घसंज्ञायां घरूपकल्प [६, ३, ४३] इति घे ह्रस्व उच्यमानस्तरपि भवति। न तु तरबन्ते। गौरी ब्राह्मणितरेति। तथा क्तक्तवतू निष्ठा [१, १, २६] इति क्तक्तवत्वोरेव निष्ठासंज्ञा। न तु तदन्तयोः। तेन दृषत्तीर्णेत्यत्र दृषदो दकारात्परस्य नत्वाभावो दकारस्य च पूर्वस्येति।

ननु संज्ञाविधौ प्रत्ययग्रहणपरिभाषा माभूत्। ह्रस्वविधौ तु घान्त एवोत्तरपदे ह्रस्वत्वेन भाव्यम्। उच्यते। हृदयस्य हृल्ले-खयदण्लासेषु [६, ३, ५०] इत्यत्राण्ग्रहणं कृत्वा लेखग्रहणा-द्ध्रस्वविधावपि न तदन्तविधिः। रदाभ्याम् [८, २, ४२] इति नत्वविधावपि संज्ञाविधौ तदन्तविधिप्रतिषेधसामर्थ्यादेव न त-दन्तविज्ञानम्। ननु ह्रस्वविधौ तदन्तविधिनिषेधस्य कृतार्थ-

त्वात् सामर्थ्यमयुक्तम् । उच्यते । यदि संज्ञाविधौ तदन्तविधिप्रतिषेधस्य तरपतमब्विधावेव प्रयोजनं तदा सुप्तिङन्तं पदम् [१, ४, १४] इत्यत्रान्तग्रहणमकृत्वा संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीत्यप्यज्ञापयित्वा तरप्तमपौ पितौ घ इति क्रियताम् । अयं चार्थः पितौ तरप्तमपौ घसंज्ञौ भवत इति । अन्तग्रहणात्तु संज्ञाविधावित्यादेरन्योऽपि विषय इति । अथ वा नत्वविधौ प्रत्ययग्रहणपरिभाषा नास्ति निष्ठाशब्दस्य तकारविशेषणत्वेनोपादानात् ।

कृत्तद्धितसमासाश्च [१, २, ४३] इत्यत्र कृत्तद्धितग्रहणेन तदन्तस्यैव संज्ञा न तत्रेयमुपतिष्ठते । यतो ऽप्रत्यय इति प्रतिषेधे प्राप्ते कृत्तद्धितयोः संज्ञाऽऽरभ्यते । अप्रत्यय इति च प्रत्ययान्तस्य प्रतिषेध इत्युक्तम् । तेन तदन्तस्य प्रतिषेधे प्राप्ते संज्ञाऽऽरभ्यमाणा तदन्तस्यैव भवति । सात्पदाद्योः [८, ३, १११] इत्यत्र सादग्रहणाच्च । यदि केवलस्य तद्धितस्य संज्ञा स्यान्न तदन्तस्य ततः सातेः प्रातिपदिकत्वात् ततः सुपि पदादित्वात् षत्वप्रतिषेधे सिद्धे साद्ग्रहणमनर्थकं स्यात् । सुपि स्थ [३, २, ४] इत्यादौ तु सुब्ग्रहणे तदन्तस्योपपदसंज्ञार्थो यत्नः कर्त्तव्यः ।

ज्ञापकं त्वस्याः सुप्तिङन्तं पदमित्यत्रान्तग्रहणम् । सुप्तिङोः प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषयैव तदन्तत्वे सिद्धे अन्तग्रहणमिहानर्थकं स्यात् ॥ २७ ॥

इति परिभाषावृत्तौ कारकपादः ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

**प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ २८॥**

यत्र प्रातिपदिकं गृह्यते तत्र लिङ्गविशिष्टस्य ल्यावन्तस्यापि ग्रहणं भवति। लिङ्गग्रहणेनात्र लिङ्गाभिव्यक्तिहेतवष्टाबादयो गृह्यन्ते। अभिधाने अभिधेयोपचारात्।

तेन यथैव भवति लोहितादिडाज्भ्यः क्यष् [३, १, १३] लोहितायते। तथैवापि लोहिनीयते। तथा सर्वनाम्नस्तृतीया च [२, ३, ७२] इति यथैव भवति भवता हेतुना। तथैवापि भवत्या हेतुनेति।

के चित्त्वचित्तहस्तिधेनोष्ठक् [४, २, ४७] इति यथा हस्तिनां समूहो हास्तिकमिति भवति। तथा हस्तिनीनां समूहो हास्तिकमित्याहुः।

तच्चाशोभनम्। ठगुत्पत्तेः प्रागेव भस्याढे तद्धित इति पुंवद्भावात्। न च जातेश्च [६, ३, ४१] इति पुंवद्भावप्रतिषेधोऽस्ति यत औपसंख्यानिकस्य तेन प्रतिषेधो न क्रियते। एतच्च प्रवाहणेयीभार्य इत्यत्र जातेश्च [६, ३, ४१] इति पुंवद्भावप्रतिषेधे सिद्धे वृद्धिनिमित्तस्येति पुनः पुंवद्भावप्रतिषेधार्थं प्रवाहणस्य ढ [७, ३, ८] इति यदुत्तरपदवृद्धिविधानं कृतम्। तेन जातेश्च [६, ३, ४१] इत्यस्यानित्यत्वं ज्ञापितम्। तेन जातेश्च [६, ३, ४१] इत्यौपसंख्यानिकस्य प्रतिषेधो न भवतीति तत्र न्यासे व्याख्यातम्। अवश्यं चैतत्। अन्यथा स्थितेऽपि हास्तिकमित्यत्र भस्याढ इत्यस्य जातेश्च [६, ३, ४१] इति प्रतिषेधात् पुंवद्भावो न स्यात्। अथ भस्याढ इत्यत्र तद्धित इति परसप्तमी न विषयसप्तमीति चेन्न। भिक्षादिभ्योऽण् [४, २, ३८] इत्यत्र विषयसप्तम्या

व्याख्यातत्वात् । तत्र ह्युक्तं युवतिशब्दस्य पाठो भस्याढे तद्धित इति पुंवद्भावप्रतिषेधार्थः यौवनमिति । अन्यथा हि तिप्रत्ययान्तस्य युवतिशब्दस्यानुदात्तादित्वादनुदात्तादेरञ् [४, २, ४४] इत्यञ्बाधनार्थः स्यात् । तथा ऽणिञोरनार्षयोः [४, १, ७८] इत्यत्र विषयसप्तमीत्वमस्या रक्षितेनोक्तम् । उच्यते । ये परसप्तमीमाश्रित्यानुदात्तादेश्च [४, २, १४] इत्यञ्बाधनार्थमेव भिक्षादिभ्योऽण् [४, २, ३८] इत्यत्र युवतिशब्दस्य पाठमिच्छन्ति । तन्मतेन द्रष्टव्यमिदम् । अत एव भागवृत्तिकारो युवतीनां समूहो यौवनमित्याह । दृश्यते च । "रूपलावण्यसंपन्नं कलाकुशलयौवनम् । यस्य पुण्यकृतः प्रेष्यं सफलं तस्य जीवित" मिति । एतस्मिन्नेव दर्शने ङ्याप् [४, १, १] सूत्रे रक्षितेनास्याः परिभाषाया हस्तिनीनां समूहो हास्तिकमित्युदाहरणमुक्तम् ।

ज्ञापकं चास्या भाष्यकारेण युवा खलतिपलितवलिनजरतीभिः [२, १, ६७] इत्यत्र समानाधिकरणाधिकारे युवजरत्योः समासविधानमुक्तम् । अन्यथा यद्येषा न स्यात्तदाऽनयोः सामानाधिकरण्यानुपपत्तेः समासोऽघटमानः स्यात् । अत्रोच्यते । ननु सत्यपि परिभाषाया अस्तित्वे युवतिजरत्योर्भिन्नार्थत्वादनुपपन्न एव समासः । तथाहि । युवतिर्द्वितीयवयाः । जरती तु वृद्धाभिधीयते । उच्यते । युवतिर्जरतीव चाञ्चल्यविरहात् । जरती वा युवतिरिव चाञ्चल्यादिति युवतिजरत्योः सामानाधिकरण्यमस्ति । यद्येवं युवा जरतीव उच्छूनस्तनत्वात् । श्मश्रुशून्यत्वाच्चेति । तथा युवेव जरती प्रागल्भ्यात् । ततश्चात्रापि सामानाधिकरण्यमस्ति तत्कथं परिभाषा ज्ञाप्यते । उच्यते । युवज-

रतीत्यत्र यूनो जरत्या सह समासे कृते तथोपचरितं सामाना-
धिकरण्यं न प्रतीयते स्वभावात् । यथा पञ्चभिर्भुक्तमस्येत्यस्या-
र्थः पञ्चभुक्तशब्देन । एतच्च भाष्यकारादिवर्णितलिङ्गविशिष्टप-
रिभाषाया अन्यथानुपपत्त्यानुमीयते ।

ननु यदि सामानाधिकरण्यानुपपत्तेः परिभाषाज्ञापनम् ।
तर्हि विपरीतोर्थः किमिति न ज्ञाप्यते । लिङ्गविशिष्टग्रहणे प्रा-
तिपदिकस्यापि ग्रहणमिति । प्रयोजनं चापि रेवतीजगतीहवि-
ष्याभ्यः प्रशस्ये [४, ४, १२२] इत्यत्र जगतीग्रहणेन जगतोऽपि
ग्रहणमिति । तथैव एण्या ढञ् [४, ३, १५८] इत्यत्र एणीग्रहणेन
एणस्यापि ग्रहणमिति । उच्यते । यदि विपरीतोऽर्थो ज्ञापितः
स्यात्तदा कुमारः श्रमणादिभिः [२, १, ७०] इत्यत्र श्रमणा-
दीनां स्त्रीलिङ्गानां निर्देशोऽनर्थकः स्यात् । नन्वेवमपि जरत्या
समास उच्यमानो जरता न प्राप्नोति युवजरन्निति । नैतदस्ति ।
वृत्त्यन्तरे जरद्भिरिति पठ्यते । उभयथा ह्याचार्येण शिष्याः प्र-
तिपादिता इत्युभयं सिध्यतीति युवखलतीत्यत्र न्यासः ।

स्वरूपविधिविषयेऽस्वरूपविधिविषये च सामान्येन परिभा-
षेयम् ।

ज्ञापकमप्याहुः । रोणी [४, २, ७८] इति । कुत्सितोऽयं निर्दे-
शः प्रथमान्तत्वात् । प्रत्ययविधौ पञ्चमी न्याय्या । तत्र यथा
प्राकरणिकी पञ्चम्यतिक्रम्यते । तथा ग्रहणवता प्रातिपदिकेन
तदन्तविधिर्नास्तीत्येतदपि वचनम् । तेन यथा रौण इत्यत्राण्
भवति तथाऽऽजकरौण इत्यत्रापि । ननु ग्रहणवता प्रातिप-
दिकेन तदन्तविधिर्नास्तीति तदन्तविधिर्निषिध्यते । नचेदं रो-

णीति प्रातिपदिकं स्त्रीप्रत्ययान्तत्वात्। एवं तर्हि तज् ज्ञापयत्यस्वरूपविधिविषये परिभाषा प्रवर्त्तत इति। तेन कुमारीमाचष्टे कुमारयतीत्यस्य सिद्धये बहुलवचनं नातिक्लिश्यते।

अनित्या चेयम्। तस्या अनित्यत्वं शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीत्यत्र घटीग्रहणेन ज्ञापितम्।

तेनान्महत [६, ३, ४६] इत्यादिना महतीप्रिय इत्यत्रात्त्वं न भवति। द्विषत्परयोस्तापेः [३, २, ३९] इत्यत्र तु द्विषतीं तापयतीत्यत्र द्वितकारकनिर्देशात् खच्प्रत्ययाभावो वृत्तिकृता व्याख्यातः। राजाहःसखिभ्यष्टच् [५, ४, ९१] इत्यत्रापि राजशब्दस्यापि पूर्वनिपातकरणान्महाराज्ञीत्यत्र टच्प्रत्ययाभावो वृत्तावुक्तः।

प्रातिपदिकग्रहणे इत्यत्र षष्ठीसमासः स च समर्थः पदविधिः [२, १, १] इत्येतत्परिभाषोपस्थानाद् भवति। तस्याः परिभाषाया अयमर्थः। पदानां विधिः समर्थो भवतीति। विधिशब्दश्चात्र कर्मसाधनः। विधीयत इति विधिः। न भावसाधनो विधानं विधिः। नाप्यधिकरणसाधनः पदानि विधीयन्तेऽस्मिन्निति पदविधिः। कर्मण्यधिकरणे च [३, ३, ९३] इति ल्युडपवादः किप्रत्ययः। तत्र कर्मसाधनग्रहणे तत्रोपपदं सप्तमीस्थम् [३, १, ९२] इत्यत्रोपपदमिति महत्याः संज्ञायाः करणं ज्ञापकम्। तथाहि। अन्वर्थसंज्ञेयं महती उपपदमिति तेन समर्थपरिभाषोपस्थानात् महान्तं कुम्भं करोतीत्यत्र सापेक्षत्वेनासामर्थ्यात्कर्मण्यण्प्रत्ययो न भवति। एतच्च प्रयोजनम् एवमुपपद्यते। यद्यत्र कर्मसाधनस्य विधिशब्दस्य ग्रहणं नान्यथेति। यत्तु तत्र

मैत्रेयेणोक्तं विधीयते विधिः। एतेन कर्मणि किप्रत्ययान्ततामाचष्टे। करणाधिकरणयोर्हि ल्युटा किप्रत्ययो बाध्यते। न च तत्र वासरूप [३, १, ९२] विधिरस्ति। क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वचनात्। संप्रदानापादाने च निरवतारे विपूर्वस्य धाञः करोत्यर्थत्वात्। भावसाधनस्तु संभवन्नपि न्यासकारेण निरस्त इति। तत्राधिकरणे किप्रत्ययो नास्तीति यदुक्तं तदयुक्तं यस्मात् पदशब्दे कर्मण्युपपदे कर्मण्यधिकरणे च [३, ३, ९३] इति ल्युडपवादः किप्रत्ययोऽस्त्येव। उच्यते। यथा केवलं विधिशब्दमुपक्रम्य न्यासकृतोक्तं मैत्रेयेणापि तथा विधानाददोषः। तथाहि। तत्र कर्मोपपदत्वाभावात् कर्मण्यधिकरणे च [३, ३, ९३] इत्यस्य न प्राप्तिः। ननु तथाप्युत्तरकालं पदशब्दस्य कर्मणोऽभिसंबन्धात् किप्रत्ययविषयोऽयमिति परित्यज्यापवादविषयमुत्सर्गोऽभिनिविशत इति ल्युट् प्रवर्त्तितुं नोत्सहते। उच्यते। पदसंस्कारपक्षेऽन्तरङ्गत्वात्प्रवर्तितो ल्युट् किप्रत्ययेन बाधितुं न शक्यते श्वः करिष्यतीत्यत्र यथा लुटा ऌट् प्रत्ययः। एतच्चासम्यक्। श्वः करिष्यतीत्यत्र युक्ता ऌटा लुटो बाधा। लुट्प्रत्ययस्योपपदसंबन्धेनाविधानात्। किप्रत्ययस्य तु कर्मोपपदसंबन्धेन विधानात् सर्वदा वाक्यसंस्कार एव युक्त इत्याहुः॥ २८॥

विभक्तौ लिङ्गविशिष्टाग्रहणम्॥ २९॥

विभक्त्याश्रयेषु कार्येषु लिङ्गविशिष्टपरिभाषा न प्रवर्त्तते। तेन गोमतीत्यत्रोगिदचाम् [७, १, ७०] इति नुम्न भवति। तथा सुपुंसीत्यत्र पुंसोऽसुङ् नेति। युवतीः पश्येत्यत्र श्वयु-

वमघोनामतद्धित [६, ४, १३३] इति संप्रसारणं न भवति । अन्ये त्वाहुः अल्लोपो ऽन [६, ४, १३४] इत्यत्रान् इति योगविभागादन्ग्रहणाभिसंबन्धादन्नन्तानां श्वयुवमघोनां संप्रसारणम् । युक्तं चैतत् । अन्यथा यद्यनया परिभाषया संप्रसारणाभावो विज्ञायते तदा युवतिशब्दात् कृदिकारादिति ङीषि कृते युवतीत्यत्र संप्रसारणं स्यादेव ।

इयं च परिभाषा युवोरनाकौ [७, १, १] इत्यत्र भाष्ये पठिता । मतुवसोरित्यत्र न्यासकारेण व्याख्याता । एतावतैव प्रमाणम् ॥ २९ ॥

इति सीरदेवकृतायां परिभाषावृत्तौ समर्थपादः ॥ १ ॥

## सूत्रे लिङ्गवचनमतन्त्रम् ॥ ३० ॥

तेन कर्मणा यमभिप्रैति [१, ४, ३२] इत्यत्र यमिति पुल्लिङ्गेनैकवचनेन च निर्देशस्यातन्त्रत्वात् लिङ्गान्तरे वचनान्तरे च संज्ञा भवति । ब्राह्मण्यै ददाति ब्राह्मणेभ्यो ददाति ।

न्यायसिद्धोऽयमर्थः । सूत्रे धान्यपलालन्यायेन लिङ्गवचनयोरुपादानात् ।

ज्ञापकं चात्रार्थे आकडारादेका संज्ञा [१, ४, १] इत्यत्रैकाग्रहणम् । अर्धं नपुंसकम् [२, २, २] इत्यत्र नपुंसकग्रहणं च । द्युद्भ्यो लुङि [१, ३, ९१] इत्यत्र त्वेकवचनेन निर्देशे कर्तव्ये यद्बहुवचनं तत्सामर्थ्यान्नेयं प्रवर्तते ॥ ३० ॥

## नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थः ॥ ३० ॥

तेनाच्चेम्छन्दस्यसर्वनामस्थानम् [६, १, १७०] इति सर्वना-

मस्थानसदृशमसर्वनामस्थानं विभक्तिर्गृह्यते।

अस्या भाष्येऽर्थो व्याख्यातः। नञिवयुक्तमन्यस्मिन्सदृशाधिकरणे वर्त्तत इति। एवं चान्यदिति प्रथमान्तप्रतिरूपको निपातोऽन्यस्मिन्नित्यर्थे वर्त्तत इति विज्ञेयम्।

अन्यः पुनराह। नञिवयुक्तं शब्दरूपं सदृशाधिकरणे वर्त्तते। कुतः। यस्मादन्यच्छब्दरूपं मुख्यार्थवाचिशब्दरूपादित्यर्थः। तदेवं नञिवशब्दाभ्यां मुख्यादर्थाद्व्यवच्छिद्य गौणेऽर्थे शब्दो व्यवस्थाप्यते। तथाह्यर्थ इति। तादृश एवार्थः प्रतीयत इत्यर्थः। एतेनास्यार्थस्य प्रतीतिसिद्धत्वं दर्शयति। सा चैषा प्रतीतिर्नञ्समासं कुर्वताऽऽचार्येण व्यक्तीकृता। तथाहि। क्षत्रियार्थे उपचरितो यो ब्राह्मणशब्दस्तेन सह नञ् समस्यते न ब्राह्मणोऽब्राह्मण इति। अत एव तत्र नञा मुख्यादर्थाद्व्यवच्छिद्य गौणेऽर्थे व्यवस्थाप्यते। यथा नीलं च तदुत्पलं चेति नीलोत्पलमिति नीलगुणेतरगुणेभ्यो व्यवच्छिद्य नीलगुणमुत्पलं व्यवस्थाप्यते। इयांस्तु विशेषः। केवलः प्रयुक्तोऽयं ब्राह्मणशब्दो मुख्यमेवार्थं गमयति प्रसिद्धिवशात्। गौणं तु नञ्संनिकर्षात्। तत्रोपचरितस्य क्षत्रियार्थस्याभिधानात्। तदेवं पर्युदासे नञ् व्याख्यातो भवति। एवं चाब्राह्मण इत्यस्य तत्पुरुषस्योत्तरपदार्थप्रधानतोपपद्यते। तस्यां च सत्यामनेकमित्यत्रैकवचनान्तता सिध्यति। तथाहि। भ्रमवशाद् द्वित्वादावर्थे लोक एकार्थस्योपचरितस्य नञ्संनिधौ गम्यमानत्वं दृश्यते। तथा चारोपितैकत्वस्यार्थस्याभिधान एकशब्द उपात्तः स्वसंख्य एव। यथा सांकाश्यं चत्वारि योजनानीत्युपचारे एकवचनमुपपद्यते। यदा

तु यत्रादित्वादावर्थे द्वित्वमारोपितं तद्भेदस्त्वाश्रीयते तदा तद्व-
चनभेदः । यथा द्युङ्घ्यो लुङि [१, ३, ९१] वृद्भ्यः स्यसनोः [१, ३,
९२] इति । एवं च कृत्वा अनेकेषामित्यादयः प्रयोगाः सिध्य-
न्ति । योऽयमत्रोत्तरपदार्थप्राधान्ये नञुक्तस्तस्य प्रायिकत्वमा-
हुः । अकर्त्तरि च कारके [३, ३, १९] इत्यत्र कारकग्रहणात् ।
नित्ये ह्यभिन्नञ्युक्तकर्तृसादृश्यादेव कारकप्रतीतिः स्यात् ।
तेन प्रसज्यप्रतिषेधेऽपि नञ्सिद्धो भवति । असूर्यंपश्या राज-
दारा इति । तथाऽभिधानसामर्थ्यादधर्मादयो नञ्समासा वि-
रुद्धादावर्थे दृश्यन्त इति । ननु नञ्समासविधौ अकारो न क-
र्त्तव्यो न ह्यन्यो नशब्दोऽस्ति यद्व्यवच्छेदाय अकारोपादानमि-
ति । अत्र पूर्वपक्षे रक्षितेन व्याख्यानम् । अत्रापीदमस्ति प्रयो-
जनं नेत्युक्ते निषेधसूत्रमेतन्माभूदिति । नैतत् । विधिवाक्यान-
र्थक्यप्रसङ्गात् । न च विधिप्रतिषेधयोः पर्यायः कल्पनीयः । म-
हाविभाषया विकल्पस्य सिद्धत्वात् । असति वा नञो अकारे
स्वरूपनिर्देशादनव्ययत्वे विभक्तिश्रुतिरेवं प्रतिषेधवाक्यतां नि-
रस्यति । न चैवमस्मदादेशस्य षष्ठीबहुवचनस्य ग्रहणप्रसङ्गः ।
षष्ठ्यन्तस्य षष्ठीत्यनेनैव समासस्य सिद्धत्वादिति । अत्राहुः ।
ननु कथं षष्ठ्यन्तस्य नञ्शब्दस्य षष्ठी [२, २, ८] इत्यनेनैव
समासोऽभिधीयते । यावता ग्रामो नः स्वमित्यत्रान्तरङ्गानपि
विधीन् बहिरङ्गो लुग् बाधते इति वचनान्नसादेशात्प्राक् समा-
से विभक्तेर्लुकि च कृते षष्ठ्यन्तत्वाभावान्नसादेशो न प्राप्नोति ।
न चास्ति प्रत्ययलक्षणेन षष्ठ्यन्तकार्यम् । सामान्यातिदेशे वि-
शेषानतिदेश इति षष्ठ्यन्तविशेषकार्यातिदेशाभावात् । अथा-

प्यनल्विधावित्यत्र विधिग्रहणादिशेषोऽप्यतिदिश्यत एवमपि तत्र श्रूयमाणविभक्त्यर्थात् स्थग्रहणादिभक्त्यभावे नञादेशो नास्त्येव। न इति तु समासार्थे सूत्रे कृतेऽन्तरङ्गानिति परिभाषा नास्तीति। नञादेशस्य समासशास्त्रनिमित्तत्वात्। तस्माच्चिन्त्योऽयं रक्षितः।

अत्र केचिच्चिन्तयन्ति। यादृशोऽत्र पूर्वपक्षस्तादृश एव सिद्धान्तः। यथा हि। अन्तरङ्गानपीति वचनात् षष्ठीबहुवचनस्य नस्शब्दस्य शङ्कैव नास्ति। अत्र यथान्तरङ्गानित्यनभ्युपगम्य षष्ठीबहुवचनस्य नस्शब्दस्य ग्रहणं शङ्कितं त्वया तथा मयाऽपि षष्ठ्यन्तस्य षष्ठी [२, २, ८] इत्यनेनैव समासः सिद्ध इत्युक्तम्॥ ३१॥

## गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः॥ ३२॥

सुप्सुपा [२, १, ४] इत्यधिकारेऽपि कुगतिप्रादयः [२, २, १८] कर्तृकरणे कृता बहुलम् [२, १, ३२] उपपदमतिङ् [२, २, १९] इति च गतीनां कारकाणामुपपदानां च योऽयं समासः स सुबुत्पत्तेः प्रागेव वेदितव्यः।

तेन प्रष्ठोत्यत्र प्रशब्दस्य गतिसंज्ञकस्य स्थशब्देनासुबन्तेनैवातस्थोपसर्गे [३, ३, १०६] इति कप्रत्ययान्तेन कुगतिप्रादय [२, २, १८] इति समासो भवति। यदि तु सुबन्तेन समासः स्यात्तदा सुपः प्रागन्तरङ्गत्वाट्टाप्स्यात्। एवं चादन्तत्वाभावात्पुंयोगादाख्यायाम् [४, १, ४८] इति ङीष् न स्यात्। तथाऽश्वधनशब्दयोश्च लब्धकारणव्यपदेशयोः कृदन्तेनैव क्रीतशब्देन कर्तृ-

करणे कृता बहुलम् [२, १, ३२] इति समासः। तथा चाश्वक्रीतधनक्रीतशब्दयोरदन्तत्वात् क्रीतात्करणपूर्वात् [४, १, ५०] इति ङीष् भवति तथा। कच्छशब्दस्य कप्रत्ययान्तेन पशब्देनोपपदमतिङ् [२, २, १९] इति समासः। तथा च कच्छपशब्दस्यादन्तत्वात् कच्छपीति जातेः [४, १, ६३] इति ङीष् भवति। अन्यान्यपि बहूनि प्रयोजनानि भाष्ये प्रतिपादितानि।

ननु कृदन्तैः समासं कृत्वा स्त्रीप्रत्ययः किमर्थं प्रतिपाद्यते यावता कृत्प्रत्ययोत्पत्त्यनन्तरकाल एव समासात्तन्निमित्तभूताच्च सुपस्ततोऽप्यन्तरङ्गत्वात् स्त्रीप्रत्ययाच्च प्रागेव पुंयोगादाख्यायाम् [४, १, ४८] इत्याद्यैर्वाक्यैः स्त्रीप्रत्यये क्रियमाणे प्रष्ठी अश्वक्रीतीत्यादि सिध्यति। मैवम्। एवं हि प्रष्ठादिसमुदायस्याकृदन्तत्वेन प्रातिपदिकत्वाभावात्तत्समुदायात् स्त्रीप्रत्ययो न शक्यते कर्तुम्। अत्रोच्यते। कृत्तद्धितसमासाश्च [१, २, ४६] इत्यत्र कृद्ग्रहणेन कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति कृद्ग्रहणपरिभाषया समुदायस्य प्रातिपदिकत्वमस्त्येव। मैवम्। अर्थवदधातुरप्रत्ययः प्रातिपदिकम् [१, २, ४५] इत्यत्राप्रत्यय इति प्रत्ययग्रहणपरिभाषया प्रत्ययान्तस्य प्रातिपदिकसंज्ञा न प्राप्नोति। अत एव तद्विषये कृद्ग्रहणेन कृदन्तस्य संज्ञा न तु कृद्ग्रहणपरिभाषया गतिकारकपूर्वस्यापि। यदि स्यात्तदा मूलकेनोपदंशं भुङ्क्ते इति तृतीयाप्रभृतीन्यन्यतरस्याम् [२, २, २१] इति समासाभावपक्षेऽपि तृतीयाया लुक् स्यात्। न च वाच्यमेवं हि विकल्पेन समासवचनमनर्थकं स्यात्। स्वरार्थत्वात्। गतिकारकोपपदात्कृत्। [६, २, १३९]

इत्येष तत्पुरुषाश्रयः स्वरो मा भूदिति। किं च यदि समासात्प्राक् स्त्रीप्रत्ययः स्यात् तदा प्रभाविनी प्रभाविणीत्यत्र ङ्यन्तस्योत्तरपदस्यान्तो नकारो न भवतीति प्रातिपदिकान्तनुम्विभक्तिषु च [८, ४, ११] इति पक्षे णत्वं न स्यात्।

इह यद्यपि प्राक् सुबुत्पत्तेरिति सामान्येनोक्तम्। तथापि गतिकारकोपपदानां सुबन्तानामेव समासो भवति। तेन चर्मक्रीती चर्मकारीत्यत्र सुबन्तत्वात्पदनिबन्धनो नलोपः सिध्यति। वैयाकरण इत्यत्र च पदत्वादैजागमः।

प्रमाणं चात्र तत्पुरुषे कृति बहुलम् [६, ३, १४] इति सप्तम्या अलुग्विधानम्। अत्र च पक्षेऽभिप्रयणादेः प्रकन्ध्वादित्वात्समासस्तेन साधुत्वम्।

ननु यद्युत्तरपदे विभक्तिर्न भवति तर्हि तस्य पदत्वं न स्यात्। ततश्चोत्तरपदव्यपदेशाभावादुत्तरपदे परतो विधीयमानोऽलुक् सरसिजमित्यत्र न स्यात्। उच्यते। समासावयवस्य हि परस्य भागस्य रूढ्योत्तरपदव्यपदेशः स्वीक्रियते। एतच्चोत्तरपदाधिकारादवसीयते। अवश्यं चैतत्। अन्यथा सत्यपि सुबन्तानां समास उत्तरपदत्वे चापदादिविधाविति वचनात् क्वाप्युत्तरपदत्वं न स्यात्।

ज्ञापिता चेयं परिभाषा भाष्यकारेणोपपदमतिङ् [२, २, १९] इत्यतिङ्ग्रहणेन। तदुक्तम्। सुप्सुपा [२, १, ४] इत्यधिकारात्तिङन्तेन समाससंभव एव नास्ति किमतिङ्ग्रहणेन। कृतं च तज् ज्ञापयत्येतयोर्योगयोः सुप्सुपा [२, १, ४] इति नाभिसम्बध्यते। तेन गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्

सुबुत्पत्तेरित्युपपन्नं भवति ।

ननु यदि गत्यादीनां सुपः प्राक् सुबन्तेन शब्दान्तरेण समासस्तदा धातूपसर्गसमुदायस्यापि स्यात् । एवं च धातूपसर्गसमुदायाद्विभक्तिः स्यात् । उच्यते । पूर्वं धातुः साधनेन युज्यत इत्येतस्मिन्दर्शन इदं समाधेयम् ।

एतस्याश्च द्वावर्थौ । गतिकारकोपपदात्कृत् [६, २, १३९] इत्यत्र न्यासकृता व्याख्यातौ । गतिकारकोपपदानां कृद्भिरेव समासो भवति स च प्राक् सुबुत्पत्तेरित्येकोर्थः । गतिकारकोपपदानामविशेषेण समासो भवति कृद्भिस्तु प्राक् सुबुत्पत्तेरिति द्वितीयः । तत्र द्वितीयेऽर्थे प्रपचतितरामित्यत्रापि समासः ।

केचित्तु सुबन्तेनैव गत्यादीनां कृद्भिः क्वचित्समासमाहुः । तथा चोपपदमतिङ् [२, २, १९] इत्यत्र रक्षितेनोक्तम् । यथा धनक्रीतेत्यत्र सुबन्तेन समासस्तथोरःकेणेत्यत्रापि । तेन सोऽपदादौ [८, ३, ३८] इति सत्वं न भवति । उरश्शब्दस्य सुबन्तेन कप्रत्ययान्तेन समासे कृते ककारस्य पदादित्वात् सोऽपदादौ [८, ३, ३८] इति विसर्जनीयस्य सत्वं न भवतीति । तदेतदयुक्तम् । तथाहि । यद्यपि सुबन्तेन समासस्तथापि सत्वेन भवितव्यम् । उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात् । कशब्दस्यासुबन्तत्वेन पदत्वाभावात् । उच्यते । उत्तरपदत्वे चापदादिविधाविति योऽयं प्रत्ययलक्षणप्रतिषेधः स सोऽपदादा [८, ३, ३८] इति प्रतिषेधे कर्त्तव्ये न प्रवर्त्तते ।

गतिकारकोपपदानामित्यस्य प्रायिकत्वं सोऽपदादौ [८, ३, ३८] इत्यत्र प्रत्ययलक्षणप्रतिषेधाप्रवर्त्तनं च भास्करान्तेत्यत्र

सत्वनिपातनादवसितम् । तथाहि । गतिकारकोपपदानामिति कृत्वा यदि सुपः प्राक् समासः । तदा भास्कर इत्यत्र उत्तरपदत्वाभावादेव सोऽपदादौ [८, ३, ३८] इति सत्वं सिद्धम् । अथास्याः परिभाषयाः प्रायिकत्वाद्भास्कर इत्यत्र सुबन्तयोरेव समासस्तथाप्युत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधेन पदत्वाभावात्सोऽपदादौ [८, ३, ३८] इति सत्वं सिद्धं स्यात् । तत्कृतमुक्तार्थस्य ज्ञापकमिति । ज्ञापकस्य प्रयोजनम् । उरःकेणत्यादौ सोऽपदादौ [८, ३, ३८] इति सत्वाभावः । नन्वेवं यदा सुपः प्राक् समासस्तदा ककारस्यापदादित्वादयःक्रीतीत्यत्र सोऽपदादौ [८, ३, ३८] इति सत्वं स्यात् । उच्यते । भवितव्यमेवात्र सत्वेनेति मन्यते । अथ वा सोऽपदादौ [८, ३, ३८] इत्यत्र पाशकल्पककाम्येष्विति परिगणनान्न भवति । यद्येवं पाशकल्पककाम्येष्विति परिगणनं न क्रियताम् । भास्कारान्तेत्यत्र यत्सत्वनिपातनं तत्सामर्थ्यादुत्तरपदे सत्वं न भवतीत्येवास्तु । तत एवायःक्रीतीत्यादौ सत्वाभावः सिद्ध इति पाशकल्पककाम्येष्विति परिगणनमनर्थकमेवेति ॥ ३५ ॥

इति परिभाषावृत्तावपरपादः ॥ २ ॥

क्व चिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ॥ ३६ ॥

तेन काञ्चनो वासयष्टिरिति नित्यं वृद्धशरादिभ्य [४, ३, १४४] इति मयटो विषयेऽनुदात्तादेश्च [४, ३, १४०] इत्यञ् भवति । तथा प्रदीयतां दाशरथाय मैथिलीत्यत्रात इञ् [४, १, ९५] इत्यस्य विषये प्राग् दीव्यतोऽण् [४, १, ८३] इत्यण् भवति ।

न्यस्त्वाच्च । समर्थानां प्रथमाद्वा [४, १, ८२] इत्यतो वानुवृत्तेरिञोऽभावपक्षे तस्यापत्यम् [४, १, ९२] इत्यणा दाशरथायेति सिद्धम् ।

एतच्चायुक्तम् । यत्रोत्सर्गो विभाषाऽपवादोऽपि तत्रापवादेन विनिर्मुक्ते विषय उत्सर्गो न प्रवर्त्तते । पीलाया वा [४, १, ११८] इति ज्ञापकात् । वाग्रहणं तु वाक्यार्थम् । दशरथापत्यमित्यादिसमासार्थं दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् [४, १, ८१] इत्यतो द्वितीयान्यतरस्यांग्रहणाऽनुवृत्तिरुक्ता न्यासकृता ।

ज्ञापकं चात्र कटं कारको व्रजतीत्यत्राकेनोर्भविष्यदाधमर्ण्ययोः [२, ३, ७०] इति भविष्यदकप्रयोगे कर्मणि षष्ठीनिषेधविधानम् । तद्धि यद्यण् कर्मणि च [३, ३, १२] इत्यपवादविषये तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् [३, ३, १०] इत्युत्सर्गः प्रवर्त्तते तदोपपद्यते नान्यथा । ननु वासरूपविधिनाऽण् कर्मणि च [३, ३, १२] इत्यपवादविषये ण्वुलपि सिद्ध एव । तत्कुतो ज्ञापकम् । उच्यते । क्रियायां क्रियार्थायामुपपदे वाऽसरूपविधिर्न भवति । ण्वुल्तृचौ [३, १, १३३] इति ण्वुलि सिद्धे पुनस्तुमुन्ण्वुलौ क्रियायाम् [३, ३, १०] इति लृट् शेषे च [३, ३, १३] इति विषये ण्वुलो विधानादवगम्यते । अन्यथा वाऽसरूपविधिनैव लृड्विषये ण्वुलः सिद्धत्वात्पुनस्तन्न कुर्यात् । कृतं चातोऽवसीयतेऽस्मिन्विषये वासरूपविधिना तृजादयो न भवन्तीति । नन्वसति प्रयोजने ज्ञापकम् । अस्ति च तुमुन्ण्वुलौ क्रियायाम् [३, ३, १०] इत्यस्य प्रयोजनं भविष्यत्काले ण्वुल्

यथा स्यात् । तेनाकेनोर्भविष्यदाधमर्ण्ययोः [२, ३, ७०] इत्यत्र भविष्यदधिकारविहितस्याकस्य ग्रहणाद्द् वर्षशतस्य पूरकः पुत्रपौत्राणां दर्शक इत्यत्र षष्ठीनिषेधो न भवति। उच्यते। भविष्यत्काले विहितस्याकस्य तत्र ग्रहणादिह दोषो नास्तीति ज्ञापकवादिनोऽभिप्रायः । तथाहि । वर्षशतस्य पूरक इत्यत्र पूरक इति पदं न भविष्यत्काले। प्रकरणादेव भविष्यतोऽवगमात् ।

क चिदिति वचनान्न सर्वत्रापवादविषय उत्सर्गाः प्रवर्तन्ते। अत एव गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि [२, ३, १२] इत्यत्र द्वितीयाग्रहणं क्रियते। अन्यथा चतुर्थी चेत्येवोच्येत । चकारकरणसामर्थ्यात्कृद्योगलक्षणा षष्ठी न भविष्यति ग्रामं गन्ता ग्रामाय गन्ता ।

भाष्ये तु सूत्रमेव प्रत्याख्यातम् । तदुक्तम् । किमर्थमिदमुच्यते। चतुर्थी यथा स्यात्। द्वितीया तु सिद्धा कर्मणीत्येव। चतुर्थ्यपि सिद्धा संप्रदान इत्येव । न सिध्यति। कर्मणा यमभिप्रैति स संप्रदानम् [१, ४, ३२] इत्युच्यते। न च कर्मणात्र ग्राममभिप्रैति किं तर्हि क्रियया । कया क्रियया। गतिक्रियया। क्रियाग्रहणं च तत्रातिदिश्यत इति ।

तत्रैतस्मिन्भाष्ये रक्षितेनोक्तम्। यथा भाष्ये सूत्रं प्रत्याख्यातम्। तथा शोभनं ग्रामं गच्छतीति क्रियाविशेषणस्य कर्मत्वं न स्यात्। ग्रामाय गम्यत इति चाकर्मकत्वाद्भावे लकारः स्यात्। अत्रोच्यते । ननु केयं वाचो युक्तिः । गत्यर्थादि [२, ३, १२] सूत्रे सति क्रियाविशेषणस्य कर्मत्वात्। शोभनं ग्रामं गच्छती-

ति सिध्यति। तदैव च भावे लकाराभावाद्ग्रामाय गम्यत इति न भवति । ग्रामो गम्यत इत्येव भवतीति। उच्यते। गत्यर्थादि [२, ३, १२] सूत्रे सति प्रार्थनाध्यवसानादिक्रियाभेदेन कर्मभूताया गतिक्रियाया विशेषणत्वाच्छोभनस्य कर्मत्वेन क्रियाग्रहणं कर्त्तव्यमित्यस्यासर्वविषयत्वाच्छोभनं ग्रामं गच्छतीति भवति। तथा गमिक्रियाव्याप्यत्वाद्ग्रामस्य कर्मत्वेन कर्मणि लकारेण कर्मणोऽभिहितत्वाद्ग्रामो गम्यत इत्येव भवति। नाकर्मकत्वाद्भावे लकारेण ग्रामाय गम्यत इति। गत्यर्थादि [२, ३, १२] सूत्राभावे तु ग्रामाय गच्छतीति सिद्धये क्रियाग्रहणं कर्त्तव्यमित्यनेन संप्रदानत्वं वक्तव्यम् । अस्य चार्थः क्रियया कर्मणा यमभिप्रैति स संप्रदानं भवतीति । अत्र ग्रामाय गच्छतीत्यत्र या गतिक्रिया तस्याः प्रार्थनाध्यवसानादिक्रियाव्याप्यत्वात्कर्मत्वम् । तथाहि । कश्चित्फलप्रेप्सुः फलं पश्यत्येतस्मा एतत्फलमिति। दृष्ट्वा प्रार्थयते। ततस्तां कर्त्तुमध्यवस्यति । गम्यमाना च क्रिया कारकाणां निमित्तमिति गम्यमानयापि प्रार्थनाध्यवसानादिक्रियया गतिक्रियायाः कर्मत्वम्। तथा च कर्मभूतया गतिक्रियया ग्रामस्याभिसम्बन्धात्संप्रदानत्वम् । अत एवात्र पक्षे रक्षितेन ग्रामाय गम्यत इति चाकर्मकत्वाद्भावे लकारः स्यादित्युक्तम् । एवं च शोभनं ग्रामं गच्छतीत्यत्र कर्मणि द्वितीयानुरोधेन प्रार्थनादिक्रियाभेदो व्याख्येयः । ततश्च गतिक्रियायाः कर्मत्वाभावात्तद्विशेषणस्य कुतः कर्मत्वमिति युक्तमुक्तं क्रियाविशेषणस्य कर्मत्वं न स्याच्छोभनं ग्रामं गच्छतीत्यत्र । ननु प्रार्थनादिक्रियाभेदविवक्षायामपि ग्रामस्य गतिक्रियाव्याप्तत्वात्कर्त्तुरीप्सिततमं कर्म

[१, ४, ४९] इति कर्मत्वं प्राप्नोति । क्रियाग्रहणं च कर्त्तव्यमिति संप्रदानत्वं च । तत्र परत्वात्कर्मसंज्ञया सिद्धं शोभनं ग्रामं गच्छतीति धातोरपि सकर्मकत्वे भावे लकारो न भविष्यति । उच्यते । एवं हि शोभनं ग्रामाय गच्छतीत्यत्रापि कर्मत्वेन संप्रदानस्य बाधनाच्चतुर्थी न स्यात् । कथं तर्हि भाष्ये सूत्रं प्रत्याख्यानम् । उच्यते । ग्रामाय गच्छतीत्यत्र पूर्वविप्रतिषेधेन संप्रदानसंज्ञैव । तथा ग्रामो गम्यत इति कर्मणि लकारार्थं प्रार्थनादिक्रियाभेदाभावाच्छोभनं ग्रामं गच्छतीत्यत्र शोभनमित्यस्य कर्मत्वार्थं भेद एव व्याख्येयो ग्राममित्यस्य त्वभेद एवेति भाष्यकाराभिप्रायः ॥ ३३ ॥

इति परिभाषावृत्तावनभिहितपादः ॥ ३ ॥

अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते ॥ ३४ ॥

समासस्य द्विपदाश्रयत्वाद् बहिरङ्गो ल्यबन्तरङ्गान्विधीन् बाधते ।

तेन प्रधायेत्यत्र दधातेर्हिः [७, ४, ४२] इति ह्यादेशो न भवति । प्रदायेत्यत्र चाऽच्उपसर्गात्तः [७, ४, ४७] इति ।

ज्ञापकं चात्रादो जग्धिर्ल्यप्ति किति [२, ४, ३६] इत्यत्र ल्यब्ग्रहणम् । अन्यथा हि प्रजग्ध्येत्यत्रान्तरङ्गत्वात् क्त्वावस्थायां तकारादौ कितीत्येव जग्धौ सिद्धे ल्यपीति न कुर्यात् । तदुक्तम् । “जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते । ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधन”मिति । ननु यथा जग्ध्यादेशस्यान्तरङ्गत्वं तथा ल्यबादेशस्यापि नित्यत्वम् । कृताकृतप्रसङ्गित्वात् । तदेवं नित्यान्तरङ्गयोः परत्वाल्ल्यपा भवितव्यम् ।

ततो ल्यपि जग्ध्यादेशो यथा स्यादित्येवमर्थं ल्यब्ग्रहणं तत्कृतो ज्ञापकम् । उच्यते जग्ध्यादेशस्यापि नित्यत्वम् । ल्यबादेशे कृतेऽसिद्धपरिभाषया तस्य प्राप्तेः ।

अथ प्रजग्ध्येत्यत्र कथं ल्यपो लकारस्येत्संज्ञा यावता ल्यबादेशस्य प्रत्ययाधिकारेऽविधानात् प्रत्ययत्वं नास्ति । प्रत्ययस्येत्यनुवृत्तौ । प्रत्ययादेरित्संज्ञा । अन्यथा शीङः शकारस्येत्संज्ञायां शीङः सार्वधातुके [७, ४, २१] इत्यत्र विशेषणार्थता स्यात् । ईङ् इति हि कृते ईङ् गतावित्यस्यापि ग्रहणं स्यात् । ङी गताविति दिवादौ पठिते शीङो ङकारोपदेशवैयर्थ्यायेत्संज्ञा । तर्हि शासेः शकारस्येत्संज्ञायां शास इदङ्हलोः [६, ४, ३४] इत्यत्र विशेषणार्थः स्यात् । एतदपि नास्ति । अङा साहचर्यादास उपवेशन इत्यस्याग्रहणात् । स्थित एव यथा आङः शासु इच्छायामित्यस्याग्रहणम् । ङुङ् शब्द इत्यत्र तर्हि आदेर्ङकारस्येत्संज्ञा स्यात् । एतदपि न । अन्तरङ्गत्वादन्त्यङकारस्येत्संज्ञायामिष्टसिद्धेः । यदि वा ङकारद्वयमादौ कृत्वा ङङु शब्द इति पठिते ङुवत इत्यत्र न दूषणम् । शा हौ [६, ४, ३५] इत्यत्र तर्हि शादेशे शकारस्येत्संज्ञायां सर्वादेशार्थः स्यात् । परमखण्डः परमखञ्ज इत्यादौ प्रातिपदिकखकारस्येत्संज्ञायां खित्यनव्ययस्य [६, ३, ६६] इति मुम् स्यात् । उच्यते । स्थानिवत्त्वेनास्य प्रत्ययत्वादित्संज्ञा भवति । यद्येवं द्विगुरेकवचनम् [२, ४, १] इत्यत्र यदुक्तं रक्षितेन पारिभाषिकैकवचनग्रहणे प्रत्ययाधिकारेऽस्याविधानादसति प्रत्ययत्वे पञ्चम्याद्येकवचनङकारस्येत्संज्ञा न स्यात् इति तदयुक्तम् । तथाहि पञ्चपूलीशब्दादन-

न्त्यपक्षे बह्वर्थत्वात् भ्यसादिषु कृतेषु तेषां स्थाने पञ्चम्याद्येकवचनेषु कृतेषु तत्र पूर्ववत्स्थानिवत्त्वमस्त्येवेतीत्संज्ञाप्राप्तेः । उच्यते । यथा क्त्वाप्रत्ययस्थाने ल्यप् विधीयते न तथा भ्यसादिषु कृतेषु ङस्यादयो विधीयन्ते । किं तर्हि बह्वषु बहुवचने प्राप्ते एकवचनं ङस्यादि विधीयते । कुतोऽत्र स्थान्यादेशभावः । ननु तथापि रचितोक्तिरसङ्गता । ङस्यादिङकारवच्चतुर्थीङकारस्यापीत्संज्ञाप्राप्तेः । उच्यते । पञ्चम्यादिर्यस्य स पञ्चम्यादिः पञ्चम्या आदिः पञ्चम्यादिरिति च पञ्चम्यादिशब्दस्य बहुव्रीहितत्पुरुषयोरेकशेषेण चतुर्थ्याः साक्षादेव ग्रहणमाख्यातम् । नन्वेवमपि टकारस्य चुटू [१, ३, ७] इतीत्संज्ञा न स्यात् । एवं तर्हि पञ्चम्यादेरित्यादिशब्दः प्रकारे । यद्येवं ङकारस्य न स्यादित्ययुक्तम् । टकारस्यापि न स्यादिति वक्तव्यम् । उच्यते । ङकारस्येति दोषोपलक्षणमिदम् । तेन प्रत्ययत्वाभावे परदेशे नियमेन प्रयोगो न स्यादित्यपि द्रष्टव्यम् । ननु तथापि सर्वप्रत्ययैकवचनसंज्ञकस्य ङस्यादेर्विधानादस्त्येवेत्संज्ञा । किं चैकवचनादिसंज्ञानुबन्धरहितस्यैव विधीयते न सानुबन्धकस्य । एकवचनादिसंज्ञायाः प्रागेवेत्संज्ञकत्वाल्लोपप्रवृत्तेः । उच्यते । एकवचनादिसंज्ञा स्वादि [४, १, २] सूत्र एव विधीयते । अत्र प्रत्ययत्वाभावादित्संज्ञा नास्ति । अतः सानुबन्धकस्यैवैकवचनादिसंज्ञा । न च स्वादि [४, १, २] सूत्र एव प्रत्ययसंज्ञा शक्यते कर्त्तुम् । अर्थवत्त्वाभावात् । प्रयोग एवार्थवत्त्वात् प्रत्ययसंज्ञा । न चात्र प्रत्ययाधिकारो नास्तीति वाच्यम् । यतोऽर्थवतः प्रत्ययसंज्ञाविधानसामर्थ्यात् शास्त्रद्वारेण प्रयोग एव प्रत्ययसंज्ञा प्र-

वर्ण्यते । यत्तु द्विगु [२, १, ५१] सूत्रे भागवृत्तिकारेणोक्तम् । समाहरणं समाहार इति भावे घञ् इति स्थिते । यदुक्तं कर्मसाधने पञ्च कुमार्यः समाहृताः पञ्चकुमारि इति गोस्त्रियोरुपसर्जनस्य [१, २, ४८] इति न प्राप्नोति । एवं तर्हि भावसाधन इति तदयुक्तम् । यतो गोस्त्रियोरुपसर्जनस्य [१, २, ४८] इत्यस्याभावे ह्रस्वो नपुंसके प्रातिपदिकस्य [१, २, ४८] इति विद्यत एव । नपुंसकत्वं तु स नपुंसकम् [२, ४, १७] इत्यनेन । अत एव स्वमोर्नपुंसकात् [७, १, २३] इति लुका न विभक्तिश्रुतिः ॥ ३५ ॥

इति परिभाषावृत्तौ द्विगुपादः ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

---

**असति संभवे बाधनं भवति ॥ ३६ ॥**

**अस्ति च संभवो यदुभयं स्यात् ॥ ३७ ॥**

कार्ययोर्विरोधादसति समावेशसद्भावे बलवतैकेनापरस्य बाधनं भवति ।

तद्यथा गोद इति कप्रत्ययेनाण्प्रत्ययस्य बाधनं भवति यथा वृक्षेभ्य इत्यत्रैत्त्वेन दीर्घस्य ।

यदि त्वस्ति सम्भवस्तदोभयमपि भवति । यच्छब्दो यद्यर्थे तदाशब्दस्याध्याहार्यः ।

यथा केकयमित्रयुप्रलयानां यादेरिय [७, ३, २] इत्यत्रेयादेशेऽपि कृते वृद्धिः । कैकेयः । प्रालेयः । तथा यथाजातीयस्तथाजातीय इत्यत्र प्रकारवचने जातीयर् [५, ३, ६९] इत्यनेन स्वभावात् प्रकारवति विधीयमानेन जातीयरा प्रकारवचने था-

त् [५, ३, २३] इत्यनेन स्वभावात् प्रकारमात्रे विधीयमानस्था-त्प्रत्ययो न बाध्यते । तथा चोरयति धारयति चिकीर्षयतीत्या-दावार्द्धधातुकसंज्ञा प्रत्ययसंज्ञां न बाधते । तत्र चोरयति चि-कीर्षयतीत्यादावार्द्धधातुकत्वेन लघूपधगुणाल्लोपौ प्रयोजन-म् । धारयतीत्यत्राचोञ्णिति [७, २, ११५] इति वृद्धिरार्द्धधातु-कत्वाभावेऽपि सिध्यति । तस्यानार्द्धधातुकाधिकारीयत्वात् । अ-त एव प्रियमाचष्टे प्रापयतीत्यादौ वृद्धिः । यस्मादेवं ततो यदु-क्तं सत्यापपाशादि [३, १, २५] सूत्रेऽनुन्यासकारेण चोरयति धारयति चिकीर्षयतीत्यादावार्द्धधातुकत्वाभावे गुणवृद्ध्यल्लोपा न स्युरिति । तत्र धारयतीत्ययुक्तम् । नायुक्तम् । धारयती-त्यत्र हेतुमति च [३, १, २६] इत्यनेन द्वितीयो णिज्वक्तव्यः । तथा च चोरयतीति सत्यापपाशादि [३, १, २५] सूत्रेण विहित-स्य प्रथमस्य णिच आर्द्धधातुकसंज्ञा प्रयोजनमुक्तम् । धारय-तीत्यत्र हेतुमति च [३, १, २६] इत्यस्य । यदि तस्यार्द्धधातुकसं-ज्ञा न स्यात्तदा पूर्वस्य णेरनिटि [६, ४, ५१] इति णिलोपो न स्यात् । ननु वृद्ध्यभावो दोष उक्तस्तत्किं णेरनिटि [६, ४, ५१] इत्यस्याभावेनोक्तं स्यात् । उच्यते । गुणवृद्ध्यल्लोपा इति वृद्धि-स्साचेति वृद्ध्यतौ तयोर्लोपौ वृद्ध्यल्लोपौ । अथ वा लुप्येते इति लोपौ वृद्ध्यतौ च तौ लोपौ चेति वृद्ध्यल्लोपाविति कर्मधार-यः । ततो गुणश्च वृद्ध्यल्लोपौ चेति द्वन्द्वः । तेन गुणवृद्ध्यल्लोपा न स्युरित्यस्यायमर्थः । गुणो न स्यात् । वृद्धिलोपो न स्यात् । अतो लोपश्च न स्यात् । ननु कथमत्र वृद्धेर्लोपः । यावता णेर-निटि [६, ४, ५१] इत्यनेन णेरेव लोपः । उच्यते । परत्वाद्वृद्धौ

कृतायां णेरनिटि [६, ४, ५१] इति वृद्धेरेव लोपः । अथ वा लोपशब्देनात्राभावोऽभिधीयते । तेनायमर्थः । वृद्धेरभावो न स्यात् । ऐकारस्य श्रवणात् । लोपे तु कृते वृद्धेरभावो भवति । ऐकारस्याश्रवणात् ।

ज्ञापकं चात्र नित्यं कौटिल्ये गतौ [३, १, २३] इत्यत्र नित्यग्रहणम् । तद्धि गत्यर्थेभ्यः कौटिल्ये एव यङ् यथा स्यात् । क्रियासमभिहारे मा भूदित्येवमर्थं क्रियते । यदि तु सत्यपि संभवे बाधनं भवेत् । तदा नित्यग्रहणमनर्थकं स्यात् । कौटिल्ययङा क्रियासमभिहारयङो बाधस्य सिद्धत्वात् । ननु कुटिलं क्रामतीति वाक्यं मा भूदित्येवमर्थं नित्यग्रहणं क्रियते तत्कुतो ज्ञापकम् । उच्यते । कुटिलं क्रामतीत्यादिकं वाक्यमिष्यमाणमेव । तथा च रक्षितः । नित्यग्रहणं वाक्यनिवृत्त्यर्थं न भवति वाक्यस्येष्यमाणत्वात् ॥ ३७ ॥

क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ॥ ३८ ॥

तेन नपुंसके भावे क्तप्रत्ययो ल्युटप्रत्ययश्च नित्यं भावे घञं बाधते । हसनं हसितमिति हासमिति न भवति । तथा समानकर्तृकेषु तुमुन् [३, ३, १५८] इच्छार्थेषूपपदेषु लिङ्लोटाविती मौ नित्यमेव बाधते । इच्छति भोक्तुमिति । तथाऽऽतो युच् [३, ३, १२८] इतीषद्दुःसुषु [३, ३, १२६] इति खलं नित्यमेव बाधते । ईषत्पानः सोमो भवतेति ।

यत्र तु क्तादय एवापोद्या उत्सर्गा इति यावत् । योऽन्योऽजादिप्रत्ययोऽपवादः स्त्र्यधिकारात् प्राग्भूतस्तत्र वासरूपविधिर्भवत्येव । यथा ण्विधौ भयादीनामुपसंख्यानमित्यण्विषये वाऽ-

सरूपविधिना ल्युडपि भवति भयं भयनमिति वर्षं वर्षणमिति।

प्रमाणं चात्र वृषभो वर्षणादिति भाष्यकृद्वचनम्।

अत एवाऽऽश्रिते भुवः करणभावयोः [३, २, ४५] इत्यत्र यदुक्तं न्यासकृता घञ्ं सारूप्याद्बाधते खच्। ल्युट्प्रत्ययः पुनर्वाऽसरूपविधिना भवत्येव। आश्रितंभवम्। आश्रितंभवनमिति। तदुपपद्यते। एतस्मिन्वाक्ये इन्दुमैत्रेययोः प्रातिको विरोधः। तथाहि। प्रत्ययसूत्रेऽनुन्यासकार उक्तवान् प्रतियन्त्यनेनार्थानिति प्रत्ययः। एरच् [३, ३, ५६] इत्यच् पुंसि संज्ञायां घः प्रायेण [३, ३, ११८] इति वा घ इति। मैत्रेयः पुनराह। पुंसि संज्ञायाम् [३, ३, ११८] इति घप्रत्यय एव। एरच् [३, ३, ५६] इत्यच्प्रत्ययस्तु करणे ल्युटा बाधितत्वान्न शक्यते कर्तुम्। न च वाऽसरूपविधिरस्ति क्तल्युडित्यादिवचनात्। तत्रायं मैत्रेयाभिप्रायः। क्तल्युट्तुमुन्खलर्थेष्वित्यत्र क्तग्रहणेन नपुंसकक्तो गृह्यते। ल्युटा साहचर्यात्। ल्युट्सहचरितस्य क्तप्रत्ययस्य ग्रहणात्। तदधीते तद्वेद [४, २, ५९] इति मतिबुद्धिपूजार्थेभ्यश्च [३, २, १८८] इति क्तविषये लटो विधानाच्च। अन्यथा ञीतः क्तः [३, २, १८७] इत्यनेन लटो बाधनाच्छेद्यतीति न स्यात्। न चैवं मिदेर्गुणः [७, ३, ८२] इत्यस्यानर्थक्यं भूते लड्मेद्यदित्यत्र कृतार्थत्वात्। एवं च मतिबुद्धिपूजार्थेभ्यश्च [३, २, १८८] इत्यत्र नञिङ्बाधनार्थः सुप्तशब्दस्य पाठोऽनर्थकः। नानर्थकः स्पष्टार्थत्वात्। अवश्यं चैतत्। अन्यथा सामान्यग्रहणेऽपि स्वपेः क्तो बाधितुं न शक्यते ञिस्वपो ञीत्करणसामर्थ्यात्। क्तादीनामपोद्यानां वाऽसरूपविधेरवस्थापितत्वाच्च। तदेवं

यदि भावविहितक्तप्रत्ययग्रहणविज्ञानाल्ल्युडपि भावविहितो गृह्यते तदा क्तग्रहणमकृत्वा ल्युड्ग्रहणमेव कुर्यात्। अत एव ह्रासमिति न भविष्यति । ल्युड्ग्रहणं तु न प्रत्याख्येयं सकर्मकेभ्यो भावे क्तप्रत्ययस्याभावात् । तत्रोभयोरुपादानसामर्थ्यात् सामान्यविहितो ल्युड् गृह्यते । अतो युक्तमुक्तं करणल्युटा वाऽसरूपविधेरभावादच्प्रत्ययो नास्तीति । अवश्यं चैतत्। अन्यथा वुञ्छणादि [४, २, ८०] सूत्रे सप्तदश प्रत्यया इति वृत्तिग्रन्थोऽसाधुः स्यात्। परिमाणाख्यायाम् [३, ३, २०] इत्यनेनाचं बाधित्वा घञो विधानात् । नन्वेवं वाऽसरूपोऽस्त्रियाम् [३, ३, २०] इत्यत्र यदुक्तं रक्षितेन ल्युट्सहचरितो नपुंसकक्तो नित्यं बाधक इष्यत इति । तथा मतिबुद्धिपूजार्थेभ्यश्च [३, ३, १८८] इत्यत्र यदुक्तं क्तल्युट्तुमुन्खलर्थेष्विति ल्युट्सहचरितो नपुंसकक्तो गृह्यत इति तदयुक्तं स्यात्। उच्यते। नात्र नपुंसकभावार्थं कृतं ल्युट्सहचरितत्वं किं तर्हि ल्युटा सह विधानम्। नपुंसके भावे क्तो ल्युट् च [३, ३, ११५] इति यावत्। अनुन्यासकारस्य त्वयमभिप्रायः । क्तल्युडित्यत्र ल्युडपि भावविहित एव गृह्यते तुमुना साहचर्यात्। उभयोपादानं तु स्पष्टार्थम् । एतच्च त्वयापि वाच्यम् । यतः सामान्यग्रहणपक्षेऽपि क्तग्रहणमनर्थकमेव। यथा करणाधिकरणयोर्ल्युटा वाऽसरूपविधेरभावदच्प्रत्ययो नास्तीत्युक्तम्। तथा भावल्युटापि सह वाऽसरूपविधेरभावाद् अघ नास्तीत्यतो ह्रासमिति न भविष्यति। न च वक्तव्यं ग्रहणोपादानात् करणाधिकरणल्युटैव वाऽसरूपविधेरभाव इति । एवं हि विज्ञायमाने प्रयोजनाभा-

वात्। नन्विदमस्ति प्रयोजनं सकर्मकेभ्यो भावे क्तो नास्तीति कारमिति यथा स्यात् सामान्यल्युड्ग्रहणे तु कारमिति न स्यात्। ल्युटा घञो बाधनात्। उच्यते। न हि ज्ञापकादनिष्टं क्रियते ज्ञापकादाचार्येणेष्टसूचनात्। अत एव नात्रोभयोरुपादानात् सामान्यविहितः क्तो गृह्यते। तदेवं करणे ल्युटा वाऽसरूपविधिनाऽस्त्येवाच्प्रत्ययः। न चास्मिन्व्याख्याने सप्तदश प्रत्यया इति वृत्तिग्रन्थोऽसङ्गतः स्यात्। पदसंस्कारपक्षे प्रत्ययशब्दं व्युत्पाद्योत्तरकालं परिमाणाख्याप्रतीतेः। घप्रत्ययेन वा सप्तदश प्रत्यया इति भविष्यति। अथ वा प्रत्यय इति सूत्रसाधने कार्यबाधापक्षेऽच्कार्यं ल्युट्शास्त्रेण बाध्यते। ल्युट्शास्त्रं च शास्त्रबाधपक्षे घशास्त्रेण बाधितम्। प्रत्ययप्रवृत्तौ त्वन्तरङ्गत्वादच् प्रत्ययः। अच्प्रवृत्तौ ल्युण् नास्ति ल्युट्शास्त्रस्य घशास्त्रेण प्रागेव बाधितत्वात्। एवं च न चक्रकमिति।

एतस्याः प्रामाण्यं वाऽसरूपोऽस्त्रियाम् [३, १, ९४] इत्यत्र वाग्रहणस्य व्यवस्थितविभाषाविज्ञानं न्यासकारेणोक्तम्। जयादित्येन तु प्रैषातिसर्ग [३, ३, १६३] इत्यत्र कृत्यग्रहणमुक्तम्। केचिद्विभाषाग्रेप्रथमपूर्वेषु [३, ४, २४] इत्यत्र विभाषाग्रहणादित्याहुः॥ २८॥

## सांप्रतिकाभावे भूतपूर्वगतिः॥ २९॥

वर्त्तमानाभावे भूतपूर्वस्याश्रयणं भवति।

यथा वृक्षैरित्यत्र बहुवचने झल्येत् [७, ३, १०३] इत्येत्त्वेऽपि कृतेऽतो भिस ऐस् [७, १, ९] प्राप्नोति। तदुक्तम्। "कृतेऽप्येत्त्वे भौतपूर्व्यादैस् तु नित्यस्तथा सती"ति। तथा आङ्कि आयाम

इत्यस्मान्निटि द्विर्वचनेऽभ्यासस्य ह्रस्वत्वे च कृते भूतपूर्वगत्या द्विमात्रोऽयमाकार इत्यत आदेः [७, ४, ७०] इति तपरकरणाद्दीर्घो न भवति । तथा च आञ्छ आञ्छतुः आञ्छुरिति तस्मान्नुड् द्विहलः [७, ४, ७१] इति नुडागमो न भवति । न चैवं पिबतेः सनि द्विर्वचनेऽभ्यासह्रस्वत्वे च कृते भूतपूर्वगत्या द्विमात्रोऽयमाकार इति तपरकरणात् पिपासतीत्यत्रेत्त्वं न प्राप्नोतीति वाच्यम् । यङ्लुगन्तात्पापठेः सनि पापठिषतीत्यत्र सांप्रतिकस्य द्विमात्रस्य व्यावृत्तौ तपरकरणस्य कृतार्थत्वात् ।

सांप्रतिकाभावग्रहणाद्धे गौरित्यत्र भूतपूर्वङन्तादेङ्ह्रस्वात्संबुद्धेः [६, १, ६९] इति संबुद्धिलोपो न भवति । हे पटो इत्यत्र सांप्रतिकस्य विद्यमानत्वात् ।

ज्ञापकं चात्राचो यत् [३, १, ९७] इत्यज्ग्रहणं तद्धि हलन्तादृहलोर्ण्यत् [३, १, १२४] इति ण्यतं वक्ष्यतीति पारिशेष्यादजन्तादेव यति सिद्धे धित्स्यं दित्स्यमित्यत्रार्धधातुक इति विषयसप्तम्यामतो लोपे कृतेऽजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थं क्रियते । एतदर्थता च तदा यदेह भूतपूर्वगतिः स्यात् ॥ ३९ ॥

## नानुबन्धकृतमसारूप्यम् ॥ ४० ॥

अनुबन्धकृतमसरूपत्वं नाश्रीयते ।

तेन गोद इति कविषयेऽण् न भवति ।

ज्ञापकं चात्र ददातिदधात्योर्विभाषा [३, १, १३९] इति णास्य विषये विकल्पेन शविधानम् । यद्यनुबन्धकृतमसारूप्यं स्यात्तदा वाऽसरूपविधिनैव दायो दद इति णशाभ्यां सिद्धं स्यात् । ननु यद्यनुबन्धकृतमपि वैरूप्यं स्यात्तदा वाऽसरूपोऽस्त्रियाम्

[३, १, ९४] इत्यत्रासरूपग्रहणमनर्थकम्। अतः सामर्थ्यात्प्रयोगगतमसारूप्यमाश्रयणीयम्। न च काणोः प्रयोगेऽसारूप्यमस्ति। अतो न भविष्यति वाऽसरूप [३, १, ९४] विधिरिति। एतच्चाप्युक्तम्। अनुबन्धसारूप्ये वाऽसरूपविधिर्मा विज्ञायीत्येवमर्थमसरूपग्रहणं स्यात्। इगुपधज्ञाप्रीकिरः कः [३, १, ३५] मूलविभुजादिभ्य उपसंख्यानमिति कः। पचाद्यच् [३, १, १३४] हरतेरनुद्यमनेऽच् [३, २, ९]। यदि हि स्यात् तदा नित्योपपदसमासाभावान्मूलानां विभुजोऽश्वस्य हर इत्यपि स्यात्। असदेतत्। मूलविभुजादिभ्य इत्यस्यानर्थकत्वात्। अकारादनुपपदात्सोपपदो भवति विप्रतिषेधेनेति वचनाच्च। अस्त्वन्तरङ्गत्वान्निरुपपदः। वाऽसरूपविधिना सोपपदो भविष्यति एवं तर्हि क्विबणोश्च श्वावकृत् श्वात्वकार इत्यत्र वाऽसरूपविधेरभावात् समावेशो न स्यात्। न क्विपः प्रयोगोऽस्ति अश्राविलात् ॥ ४० ॥

इति श्रीसीरदेवकृतायां परिभाषावृत्तौ प्रत्ययपादः ॥ १ ॥

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य ॥ ४२ ॥

लक्षणं लाक्षणिकमुपचारात्। प्रतिपदोक्तं विशेषेण प्रतिपादितम्। तयोर्मध्ये प्रतिपदोक्तस्यैव ग्रहणं भवति न तु लाक्षणिकस्य खण्डतो व्युत्पादितस्य।

तद्यथा। इको णिचि क्रीङ्जीनां णौ [६, १, ४८] इत्यात्त्वे पुकि च कृते आप्रूपे सम्पन्ने ऽप्यपि परतो विभाषाप [६, ४;

५७] इत्यनेनायादेशो न भवति । अध्याप्य गत इति । प्रतिपदोक्तस्य ल्यपेर्धातोर्भवति प्राप्य प्रापय्येति । तथा वसेः क्विपि उषितिं । उषा चरतीत्यर्थे चरति [४, ४, ८] इति तृतीयासमर्थात् ठकि कृते उस्शब्दस्य लाक्षणिकत्वादिसुसुक्तान्तात् कः [७, ३, ५१] इति को न भवति । औषिकमिति । प्रतिपदोक्तोसुप्रत्ययान्ताद्भवति । धानुष्क इति ।

नन्वेवं सति क्तावामश्च [३, २, २] इत्यत्र माग्रहणेन मेङो ग्रहणं न स्यात् । न । गामादाग्रहणपरिभाषया लाक्षणिकस्यापि भवति । न चैवं मा मान इत्यस्यापि ग्रहणमिति वाच्यम् । गामादाग्रहणपरिभाषया लुग्विकरणपरिभाषाबाधस्यानिष्यमाणत्वात् ।

यत्तु घुमास्थागादि [६, ४, ६६] सूत्रे न्यासकारेण लुग्विकरणपरिभाषाया अपि बाध उक्तः । तत्केषां चिन्मतमिति । यत्तु क्तावामश्च [३, २, २] इत्यत्र मैत्रेयेणोक्तं येषां दर्शनं गामादाग्रहणेष्वविशेष इति लक्षणप्रतिपदोक्तपरिभाषाबाधनार्थमिदं निरनुबन्धकपरिभाषाबाधनार्थमिदं वा तेषां मा मान इत्यस्य लुग्विकरणत्वाद् ग्रहणं वेदितव्यम् । तत्र यदुक्तं लक्षणप्रतिपदोक्तपरिभाषाबाधनार्थमिति तदयुक्तम् । एवं हि सानुबन्धकत्वान्माङ्मेङोरेव ग्रहणं न स्यात् । मा मान इत्यस्यैव निरनुबन्धकस्य स्यात् । निरनुबन्धकलुग्विकरणविचारे चान्तरङ्गत्वान्निरनुबन्धकपरिभाषैव प्रवर्त्तते । अन्यथा व्याख्याने त्वस्तेर्भूः [२, ४, ५२] इति श्तिपा निर्देशो वैचित्र्यार्थ इति यदुक्तं तदसंगतं स्यात् । असति श्तिपा निर्देशे लुग्विकरणपरिभाषया

माङ् मेपण इत्यस्यैव ग्रहणप्रसङ्गात् । अथ निरनुबन्धकपरिभाषायाः प्रत्ययविषयत्वादिह धातुग्रहणे तद्व्यापाराभावः । यथा न कवतेर्यङि [७, ४, ६३] इत्यत्र व्याख्यातं न्यासकृता । लुग्विकरणपरिभाषया कौतेरग्रहणमिति । तथापि यदुक्तं निरनुबन्धकपरिभाषाबाधनार्थमिदं चेति । तदसङ्गतं यतो निरनुबन्धकपरिभाषाबाधे लाक्षणिकत्वान्मेङो ग्रहणं न स्यात् । माङ् मान इत्यस्यैव ग्रहणं स्यात् । उच्यते । नेदं रचितेन व्यवस्थार्थमुक्तम् । किं तर्हि सर्वथा लुग्विकरणपरिभाषा गामादाग्रहणपरिभाषया न बाध्यत इति प्रदर्शनार्थम् । तथाहि । इदं केषां चिद्दर्शनं लक्षणपरिभाषा बाध्यते केषां चिन्निरनुबन्धकपरिभाषा बाध्यते केषां चिदुभयपरिभाषा न तु लुग्विकरणपरिभाषापीति यावत् । एतच्चायुक्तम् । घुमास्थागापि [६, ४, ६६] सूत्रे न्यासकारेण लुग्विकरणपरिभाषाबाधस्याप्युक्तत्वात् । एवं तर्हि निरनुबन्धकपरिभाषाबाधनार्थं वेति । नायं वाशब्दः पक्षान्तरे किं तर्हि समुच्चये । तदयमर्थः । गामादाग्रहणपरिभाषा लक्षणपरिभाषां बाधते निरनुबन्धकपरिभाषामपीति । समुच्चयेऽपि वाशब्दो दृश्यत एव । यथा संगवशब्दस्य व्युत्पत्तौ न्यासकृतोक्तं सम्यक् समन्ताद्वेति । अस्यायमर्थः । सम्यक्समन्ताच्चेति ।

खण्डशो व्युत्पन्नं हि लाक्षणिकमिति न सर्वसंमतम् । तेन विभाषा दिक्समासे बहुव्रीहौ [१, १, २८] इत्यत्र सर्वनामविधौ प्रतिपदोक्तस्य दिङ्नामान्यन्तराले [२, २, २६] इति बहुव्रीहेर्ग्रहणं दक्षिणपूर्वस्यै देहीति । न त्वनेकमन्यपदार्थे [२, २,

२४] इत्यस्य । या पूर्वा सोत्तरास्योन्मुग्धस्य तस्मै पूर्वोत्तरायेति । तथा च ऋत इद्धातोः [१, १, १००] इत्यत्र ऋवर्णग्रहणोपीयमुक्ता ।

ज्ञापकं चात्र कर्त्तरि भुवः खिष्णुच् खुकञौ [३, ३, ५७] इत्यत्र खिष्णुच इकारादित्वम् । तदुक्तम् । उदात्तत्वाद्भुवः सिद्धमिकारादित्वमिष्णुचः । तत्रस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ।

अनित्या चेयं परिभाषा । तस्यानित्यत्वं यावत्पुरानिपातयोः [३, ३, ४] इति विशेषणादवसितम् । तेन दाधाघ्वदाप् [१, १, २०] इत्यत्र धाग्रहणेन धेटोऽपि ग्रहणं भवति । एतत्त्वपिदिति कर्त्तव्येऽदाविति यत् कृतं तत्सरूपपरिभाषाया अभावे चेतुरिति तत एव सिद्धम् । इदं तु वक्तव्यम् । अध्यापयतीत्यत्र लाक्षणिकस्याकारस्य पुगिति ॥ ४१ ॥

## एकदेशविकृतमनन्यवत् ॥ ४२ ॥

तेनाभवदित्यत्रेतश्च [३, ४, १००] इतीकारलोपे कृते तिङाश्रया सार्वधातुकसंज्ञा पदसंज्ञा च । तथा करिषीष्टेत्यत्र सुसिचसीयुट् [६, ४, ६२] इति सीयुड्ग्रहणेन सीमात्रस्य ग्रहणम् । प्रक्षिणोतीत्यत्र त्वचः परस्मिन् [१, १, ५७] इत्यादिना स्थानिवद्भावेनापि क्षिनुमीना [८, ४, १५] इति णत्वं सिध्यति ।

न्यायसिद्धेयम् । तथाहि कर्णच्छेदेऽपि श्वा श्वैव नाश्वो नापि गर्द्दभ इति ।

ज्ञापकमप्याहुः । आढ्यादि [३, २, ५६] सूत्रेऽच्वाविति प्रतिषेधः ॥ ४२ ॥

क्व चिद्विकृतिरपि प्रकृतिं गृह्णाति ॥ ४३ ॥

तेन निसमुपविभ्यो ह्वः [१, ३, ३०] इति ह्वाधातोरात्मने-पदमुच्यमानं प्रकृतिभूतादपि भवति । निह्वयते संह्वयते ।

ज्ञापकञ्चात्र न व्यो लिटि [६, १, ४६] इति विकृतस्य व्येञि-त्यस्य निर्देशेन व्येञ आत्त्वनिषेधविधानम् । अत्राहुः । न व्यो लिटि [६, १, ४६] इत्यत्र निसमुपविभ्यो ह्वः [१, ३, ३०] इत्यत्र चैकारान्ताया एव प्रकृतेरुपादानम् । विकृतिस्तु लक्षणागतेना-त्वेन । तस्माद्दाधाघ्वदाप् [१, १, २७] इत्यत्र दाधाग्रहणे प्रकृति-भूतयोरपि देङ्धेटोर्ग्रहणम् । प्रणिदयते प्रणिधयतीति ॥ ४३ ॥

बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ४४ ॥

गुणो विशेषणमुपलक्षणम् । चित्रगवादिः स गुणो यस्यास्ति स तद्गुणः । बहुव्रीहिसमासे विशेषणसहितस्यैव शास्त्रे संवि-ज्ञानम् ।

तद्यथा । सर्वादीनि सर्वनामानीति सर्वस्यापि संज्ञा सिध्यति सर्वस्मायिति । तथा । मत्वर्थे [१, ४, १९] इत्यत्र तूदश्वित्त्वानित्य-त्वोपलक्ष्ये मत्वर्थे मतुपोऽन्तर्भावात्तद्द्वारेणैव मतुपि संज्ञाकार्यं सिद्धम् । न तत्रेयमपेक्ष्यते । यथा काकेभ्यो दधि रक्ष्यतामित्य-त्रोपलक्षणात् काकादपि रक्ष्यते । सूत्रेऽपिशब्दात् क्व चिदत-द्गुणसंविज्ञानमपि वेदितव्यम् । तदुक्तं सिद्धं तद्गुणागुणाभ्यां पा-णिनेर्यथा लोक इति । लोके हि तद्गुणेऽतद्गुणे च बहुव्रीहिर्दृ-श्यते । यथा लम्बकर्णमानय । चित्रगुमानयेति ।

ज्ञापकं चात्राढ्यादि [३, २, ५६] सूत्रे च्व्यर्थेष्वित्युक्त्वाऽच्वा-विति निषेधवचनम् ।

युक्तिरप्यत्र विद्यते । तथाहि । सर्व आदिर्येषामिति न विश्वादयोऽन्यपदार्थाः । न हि तेषामवयवः सर्वशब्दो भवति । तस्यानारम्भकत्वात् । न च समीपार्थे बहुव्रीहिरस्ति । अनभिधानात् । न हि लम्बकर्ण इत्यनेन यस्य समीपे लम्बौ कर्णौ सोऽभिधीयते । किं तर्हि यस्यावयवौ स एव । तस्मात् समुदाय एवान्यपदार्थः न च समुदायस्यैकत्वात् सर्वादीनि [१, १, २७] इत्यत्र बहुवचनानुपपत्तिः । उद्रिक्तावयवभेदः समुदायोऽन्यपदार्थ इत्याश्रयणात् । अतो बहुवचनं युक्तमेव । तदेवं समुदाये सर्वशब्दोऽन्तर्भूत इति तस्यापि संज्ञा भवति ॥ ४४ ॥

ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ॥ ४५ ॥

तद्यथाऽलङ्कृञ् [३, २, १३६] इतीष्णुचाऽलङ्करिष्णुरित्येव भवति । न वाऽसरूप [३, १, ९४] विधिनालङ्कारक इति ।

ज्ञापकं चात्र तृजबाधनार्थं निन्दहिंसादि [३, २, १४६] सूत्र वुञो विधानम् । यदि हि वाऽसरूप [३, १, ९४] विधिना ण्वुलादयस्ताच्छीलिकेषु भवेयुः । तदा ण्वुल्तृचौ [३, १, १३३] इति ण्वुलि कृते निन्दको हिंसक इत्यादयः सिद्धाः । किं वुञो विधानेन । तत्कृतं ज्ञापयति ताच्छीलिकेषु वाऽसरूप [३, १, ९४] विधिना तृजादयो न भवन्तीति । तदेवं ताच्छीलिकानामताच्छीलिकैर्वाऽसरूप [३, १, ९१] विधिर्नास्तीति ज्ञापितम् । इदानीं तु ताच्छीलिकानां ताच्छीलिकैरेव वाऽसरूप [३, १, ९४] विधिर्नास्तीति ज्ञाप्यते । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपद [३, २, १५०] इत्यत्र पदेर्धातोर्युजर्थं पदग्रहणमनर्थकम् । अनुदात्तेतश्च हलादेः [३, २, १४९] इत्यने-

नैव युचा पठन इत्यस्य सिद्धत्वात् । एवं तर्हि जपपतपद [३, २, १५४] इति पद्यतेर्युचो बाधक उकञ् स्यात् । न । वाऽसरूप [३, १, ९४] विधिना युजपि भविष्यति । तदेव युज्विधानं ज्ञापयति ताच्छीलिकानां ताच्छीलिकैर्वाऽसरूप [३, १, ९४] विधिर्नास्तीति । तेनालंपूर्वात्करोतेस्तृन भवति अलंकर्त्तेति ।

प्रायिकं चैतत् । सूददीपदीक्षश्च [३, २, १५३] इति दीपो युच्प्रतिषेधेन ज्ञापितम् । यदि ताच्छीलिकेषु वाऽसरूप [३, १, ९४] विधिर्नास्त्येव । तदा नमिकम्पिस्म्यजसकमहिंसदीपो रः [३, २, १६७] इति रप्रत्ययेनैव विशेषविहितेन युज् बाधिष्यते किं प्रतिषेधेन । तत् कुर्वन् ज्ञापयति क्वचिदस्ति समावेश इति कम्रा कमना यवतिरिति रयुचोः समावेशः सिद्धः । गन्ताऽखिलः गामुक इति तृजुकञोर्विकत्थी विकत्थन इति घिनुण्युचोः समावेशः सिद्धः ॥ ४५ ॥

इति परिभाषावृत्तौ कर्मणिपादः ॥ २ ॥

## पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ॥ ४६ ॥

पूर्वस्था अपवादा अनन्तरान् समीपस्थानेवोत्सर्गान् बाधन्ते नोत्तरान् । व्यवहितार्थोऽत्रोत्तरशब्दः ।

तद्यथा । क्त्वावामश्च [३, २, २] इत्यपवादः समीपमेवानुपसर्गे कं बाधते न व्यवहितं ताच्छीलिकणिनिं स्वर्गह्वायीति । बाध्यविशेषचिन्तायां चैषा परिभाषा प्रवर्त्तते न समुदायापेक्षयेतीको झल् [१, २, ९] इत्यत्र न्यासकृतोक्तम् । तेन निष्ठायां सेटि [६, ४, ५२] इत्यनेन णिलोपेन यथा भक्षितमित्यत्रेयङ्

बाध्यते तथा कारितमित्यत्रैरनेकाचोऽसंयोगपूर्वस्य [६, ४, ८] इति यणादेशस्येति ।

ज्ञापकं चात्र परिभाषाख्यायां सर्वेभ्य [१, १, २०] इत्यत्र सर्वग्रहणम् । तद्धि द्वौ कारौ त्रयः कारा इत्यत्रापो बाधनार्थम् । अन्यथा पुरस्तादपवादन्यायेन समीपस्थैरच् [१, १, ५६] इत्यस्यैव बाधकं स्यादिति । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेत्येतत्स्वरूपयाऽनयैव च परिभाषया वोताप्योः [३, ३, १४१] इत्यत्र सूत्रे न्यासे यदुक्तम् । यद्यवाङो निर्देशस्तदा वोताप्योः [२, ३, १४१] इति प्राप्नोति । परेण सह गुणे कृते पूर्वेण सह वृद्ध्या भवितव्यम् । सौत्रत्वाददोष इति । तदुपपद्यते । तथाह्योमाङोश्च [६, १, ९५] इत्यनेन पररूपत्वेन समीपभूतमकः सवर्णे [६, १, १०१] दीर्घत्वं बाध्यते । न तु वृद्धिरेचि [६, १, ८८] इत्यपि । अन्यथा ह्योमाङोश्च [६, १, ९६] इत्यनेन वृद्धिदीर्घयोरपवादेन पररूपत्वेन वोताप्योः [३, ३, १४१] इतिनिर्देशस्य सिद्धत्वान्निर्देशादस्य सिद्धिरित्ययुक्तमुक्तं स्यात् । एतच्चासम्यक् । सवर्णदीर्घबाधने तु ओमाङोश्च [६, १, ९५] इति पररूपविधानवैयर्थ्यात् । नैतत् । अच्छाकादनमित्यादौ पररूपत्वेनानुनासिकाकारनिवृत्तेः प्रयोजनत्वात् । अन्यथा सवर्णदीर्घत्वेनात्र पक्षेऽनुनासिकोप्याकारः स्यात् । तदेवमोमाङोश्च [६, १, ९५] इत्यत्र यन्मैत्रेयेणोक्तम् । आङा सह यत्रैकादेशो नास्ति तत्र पररूपत्वेन सवर्णदीर्घत्वेन विशेष इत्येकादेश उदाह्रियते आऊढा ओढा अद्योढेति । तच्चिन्त्यम् । तदेतदनन्तरोक्तन्याससमर्थनमयुक्तम् तच्च वृत्तिकारादिभिः प-

रूपत्वस्य सर्वापवादत्वेन व्याख्यातत्वात् अत एवाद्योढेत्युदा-
हृतं वृत्तौ ॥ ४६ ॥

इति परिभाषावृत्तौ बङ्गलपादः ॥ ३ ॥

नानुबन्धकृतमनेजन्तत्वम् ॥ ४७ ॥

तेन दाधा घ्वदाप् [१, १, २०] इत्यत्र दाधाग्रहणेन देङ्धेटो-
रपि ग्रहणम् । अन्यथा गतेप्यनुबन्ध उपदेश एजन्तत्वाभावा-
च्चेता स्तोतेनिवदात्त्वाभावात्तयोर्ग्रहणं न स्यात् । एतच्चायुक्त-
म् । स्यसिच्सीयुट्तासिषु [६, ४, ६२] इत्यत्राजग्रहणं कृत्वा
यद् ग्रहेरुपादनं करोति तेनोपदेशाश्रयकार्यविषयेऽनुबन्धो
नाश्रीयत इत्यस्य ज्ञापितत्वात् । यथा पिब्ध्यातौ प्रनिपेष्टेत्यत्र
शेषे विभाषा कखादावषान्त उपदेशे [८, ४, १८] इति प्रतिषे-
धाणत्वं न भवति । तथाचाप्यनुबन्धे गतेऽप्येजन्ताश्रयेणात्वेन
भवितव्यमेव । इदं तूदाहरणम् । अदाबिति दाप्ग्रहणे दैपो-
ऽपि घुसंज्ञाप्रतिषेधः सिद्धः । अवदातं मुखमिति । भाष्ये पुन-
र्द्दैवादौ दाप् शोधन इति पठितव्यमित्युक्तम् ।

नन्वेतद्यदि प्रयोजनं तदा दाधा घ्वपिदिति क्रियताम् । एवं
हि दैपोपि पित्वाद् घुसंज्ञाप्रतिषेधः सिद्ध्यति । लाघवञ्च भवति ।
नानुबन्धकृतपरिभाषापि नाश्रयितव्या भवति । उच्यते । दाधा
घ्वपिदिति कृते लक्षणपरिभाषात्र न प्रवर्त्तेत इत्यत्रार्थे प्रमाणं
न स्यात् । अदाबिति तु कृते यथा प्रतिषेधे लाक्षणिकस्यापि
दैपो ग्रहणम् । तथा विधावपि दाधाग्रहणेन लाक्षणिकस्यापि
ग्रहणमुपपद्यते । तथा चोदीचां माङो व्यतीहारे [३, ४, १९]
इत्यत्र रक्षितेनोक्तं ज्ञापकफलमिदं दाधा घ्वपिदित्यनेन यद्यपि

सिध्यति । तथापि तथा निर्देशो न कृत इति तत्रैव प्रतिपादितमिति । किं त्वपाविति द्विवचनेन निर्देशे कृतेऽविद्यमानः पकारो यथोस्तावपाविति प्रतिषेधे दाब्धैपोर्ग्रहणसामर्थ्याद्विधावपि दाधावपि दाधाग्रहणे लक्षणपरिभाषातिक्रमः शक्यत एव व्याख्यातुम् । तथा तु न कृतं प्रणिदापयतीत्यत्रापि पुकि कृतेऽपाविति प्रतिषेधाशङ्काप्रसङ्गात् । अपिताविति तु कृते यद्यप्येतत्परिह्रियते तथापि तथा न कृतं वैचित्र्यार्थत्वात् ।

ज्ञापकं चात्रोदीचां माङो व्यतीहारे [३, ४, १९] इति कृतात्त्वस्य निर्देशः । अनेजन्तत्वे हि स न स्यात् । न च माङ् मान इत्यस्यैव निर्देशस्तस्य व्यतीहारे वृत्त्यसंभवात् ॥ ४७ ॥

चानुकृष्टं नोत्तरत्र ॥ ४८ ॥

चकारेणानुकृष्टमुत्तरत्र नाभिसम्बध्यते ।

तेन वदः सुपि क्यप् च [३, १, १०६] इति चकारेणानुकृष्टस्य यतो भुवो भाव इत्यत्रानुवृत्तिर्न भवति क्यपस्तु भवति ब्रह्मभूयमिति ।

यत्र स्वरितत्वेनानुवृत्तौ सिद्धायां चकारेणानुकर्षणं क्रियते तत्रास्या व्यापारः । यत्र तु प्रतियोगिनं दृष्ट्वा निवृत्तौ प्राप्तायां चकारेणानुवर्तनं तत्रेयं नोपतिष्ठते । तेनान्तरान्तरेणयुक्ते [२, ३, ४] इत्यत्र द्वितीयानुवर्तते । मैत्रेयः पुनः सामान्येनैतां मन्यते । यदाह । इको झल् [१, २, ९] इत्यत्र चानुकृष्टत्वादित्यपि सिद्धान्त इति ।

ज्ञापकं चात्राऽव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ [३, ४, ५९] इत्यत्र णमुलधिकारेण णमुल्वचनं यदि चानुकृष्टम-

प्यनुवर्त्तेत तदा त्क्त्वा चेत्येवोच्येत।

अनित्या चेयम्। तथ्थानित्यत्वं प्रातिपदिकान्तनुम्विभक्तिषु च [८, ४, ११] इति चानुकृष्टमपि विकल्पं निवर्त्तयितुमेकाजुत्तरपदे णः [८, ४, १२] इति पुनर्ग्रहणादवसीयते॥४८॥

इति सम्बन्धपादः॥४॥

इति तृतीयोऽध्यायः॥३॥

---

मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्॥४९॥

तद्यथा। कृञो हेतुताच्छील्यानुलोम्येषु [३, २, २०] इति पूर्वमणं बाधते। विद्या यशस्करी। न परं ताच्छीलिकणिनिं श्राद्धकारीति। एवमिणो यण् [६, ४, ८१] इति पूर्वमियङं बाधते। न परौ वृद्धिगुणौ आयकमयनमिति। न संप्रसारणे संप्रसारणम् [६, १, ३७] इत्यत्र संप्रसारणग्रहणानुवृत्तौ यत् संप्रसारणग्रहणं तत्सामर्थ्यादुत्तरस्यापि श्वयुवमघोनामतद्धिते [६, ४, १३३] इत्येतस्य प्रतिषेधो भवति। यूनः पश्य यूना यूने इति। अत एव संप्रसारणग्रहणसामर्थ्यात् संप्रसारणप्रतिषेधे कर्त्तव्येऽचः परस्मिन् [१, १, ५७] इति स्थानिवद्भावोऽपि न प्रवर्त्तते स्थानिवत्कृतं व्यवधानं वा नाश्रीयते। ननु तत्र व्यथो लिटि [६, ४, ५२] इति यत्संप्रसारणमव्यवधाने प्राप्नोति तद्बाधनार्थं संप्रसारणग्रहणं स्यादिव्यथ इति। नैतत्। यद्येतावत्प्रयोजनं स्यात्तदा संप्रसारणग्रहणमकृत्वा व्यथ इत्येवं कुर्यात्। व्यथश्च संप्रसारणे संप्रसारणं न भवतीति सिद्धं विव्यथ इति। व्यथो लिटि [७, ४, ६८] इत्यत्रैव वा व्यथो यो लिटीति कुर्यादिति।

ज्ञापकं चात्र बह्वोश्चेहृधसो ङीष् [४, १, २५] इत्यत्र स्वरितत्वासञ्जनं वृत्तिन्यासप्रतिपादितम्। तज्ञन उपधालोपिनो-ऽन्यतरस्याम् [४, १, २८] इत्यत्र स्वरितत्वादनुवर्त्तते । तेनान उपधालोपिनोऽन्यतरस्याम् [४, १, २८] इति परत्वाद् भविष्यन्तं ङीपं बाधित्वा बह्वोश्चेहृधसो ङीष् [४, १, २५] इति ङीषेव भवति। घटोध्नीति। अन्यथा ङीष् मध्येपवादत्वात्पूर्वयोरेव डाप्प्रतिषेधयोर्बाधकः स्यात्। ङीष्ङीपोश्च स्वरे भेदः। स्वरोपि भेदको भवति। यदाहुः। त्रिधा शब्दो भिद्यते रूपतोऽर्थतः स्वरतश्चेति। तथा च तद्धिता इत्यत्र मैत्रेयः प्रतिपादितवान्। यदि त्र्यधिकारात् पूर्वमिदं स्यात् तदा दूषणान्तरम्। ईहा चेष्टेति। यस्येति चेति लोपे कृते एकादेश उदात्तेनोदात्त [८, २, ५] इत्युदात्तो न स्यात्। अत्र चोदयन्ति। ईहा चेष्टेत्यत्राकारलोपे कृते यद्यप्येकादेश उदात्तेनोदात्त [८, २, ५] इत्युदात्तत्वं नास्ति तथाप्यनुदात्तस्य च यत्रोदात्तलोप [६, १, १६१] इत्यनेनोदात्तत्वं विद्यत एवेति। न चानयोरुदात्तयोर्विशेषोस्ति । अस्तीत्युच्यते। तथाहि। यदैकादेश उदात्तेनोदात्त [८, २, ५] इत्यनेनासिद्धाधिकारीयेणोदात्तत्वं क्रियते तदा पूर्वत्रासिद्धम् [८, २, १] इति तस्यासिद्धत्वादुदात्तस्वरितपरस्य सन्नतर [१, २, ४०] इत्यनेनेकारैकारौ सन्नतरौ न भवतः सन्नतरोऽनुदात्ततर इत्यर्थः । यदा त्वनुदात्तस्य च यत्रोदात्तलोप [६, १, १६१] इत्यनेन क्रियते। तदा तस्य सिद्धत्वादुदात्तस्वरितपरस्य सन्नतर [१, २, ४०] इति सन्नतरः स्यात्। एकादेशस्वरस्यासिद्धत्वेऽप्यकारप्रत्ययस्योदात्तत्वमाश्रित्य सन्नतरेण

भवितव्यमेवेति न वाच्यम् । यत एकादेशेन प्रत्ययस्य निवर्त्तितत्वात् । कुतस्तस्याद्युदात्तत्वम् । असिद्धत्वं त्वेकादेशस्वरस्य न त्वेकादेशस्य । नन्वेवमप्येकादेशस्वरोऽन्तरङ्गसिद्धो वक्तव्य इत्यनेनैकादेशस्वरस्य सिद्धत्वात् सन्नतरेण भवितव्यमेव । उच्यते । तत्र हि परिगणनमस्ति । अथवायावैकादेशशतृस्वरैकानुदात्तसर्वानुदात्तार्थं इति । नन्वेवमपि स्वरितपरत्वात् सन्नतरेण भवितव्यमेव । एकादेशस्वरस्याऽसिद्धत्वादुदात्तानुदात्तयोरेकादेश आन्तरतम्यात् स्वरितः । नैतत् । आन्तरतमस्वरस्योदात्तत्वेन बाधितत्वात् । अथ तस्यासिद्धत्वात् कुतस्तेन बाधेति चेत् । न । परिहृत्यापवादविषयमुत्सर्गः प्रवर्त्तत इति स्वरित उदात्तविषये न प्रवर्त्तते । नन्वसिद्धत्वात् कुतस्तस्य विषयोऽयमुच्यते । उच्यते । असिद्धत्वेन तत्काल उदात्तत्वस्य प्रवृत्तिर्निराक्रियते । न त्वविषयत्वं क्रियते । विषये च प्रवर्त्तमानोऽपवाद उत्सर्गं बाधत एव । ददतीत्यत्रादादेशो यथा । एवञ्चात्रापि स्वरितस्योदात्तत्वेन बाधा कर्त्तव्या । नन्वेवमपि सन्नतरोऽत्रानिवार्य्य एव । ईहचेष्टिभ्यां गुरोश्च हल [३, ३, १०३] इत्यकारप्रत्यये कृते टाबुत्पत्तेः प्रागेव सन्नतरेण भवितव्यमन्तरङ्गत्वात् । तस्माद्बोद्धव्योऽयं रचितः । बोद्धव्याश्च विस्तरा एव रचितग्रन्था विद्यन्ते । तथाहि । ङ्याप् [४, १, १] सूत्रे आबन्तेष्वपि डाप्चाबन्तयोः पूर्वोक्तात् कारणादिति । तथा तत्रैवेह चेतः स्त्रियाम् [५, ४, १५२] इतीनन्ताद्दृढदण्डिनीका चेति विभाषा कब्विधिरिति । तथा ऋन्नेभ्यो ङीप् [४, १, ५] इत्यत्र कर्त्री हर्त्रीति घेर्ङिति [७, ३, ११२] इति न

गुणः सुपि च [७, ३, १०२] इत्यनुवृत्तेः सुपि ङिति तद्विधानादिति । न क्रोडादिबह्वचः [४, १, ५६] इत्यत्र यथा क्रोडाद्यव्रात् स्त्रीलिङ्गात् प्रतिषेध उक्तस्तथा पुंलिङ्गाद्भवितव्यमेवेति लक्ष्यत इति ॥ ४९ ॥

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ॥ ५० ॥**

विधिर्वा प्रतिषेधो वाऽनन्तरस्यैव भवति ।

यथा वा च्छन्दसि [३, ४, ८८] इत्यनेन सेह्यपिच्च [३, ४, ८७] इत्यनन्तरमपित्त्वं विकल्प्यते न तु व्यवहितो हिरादेशः । युयुहि युयोहि । तथा नेटि [७, २, ४] इति वृद्धिप्रतिषेधोऽनन्तरस्यैव वदव्रजहलन्तस्याचः [७, २, ३] इत्यस्य भवति । अदेवीदिति । न सिचि वृद्धेर्नापि मृजेर्वृद्धिः [७, २, ११४] इत्यस्य अलावीदमार्जीदिति । क्व चित्तु स्वरितत्वप्रतिज्ञानसामर्थ्याद्व्यवहितस्यापि विधिनिषेधौ भवतः । यथा टिड्ढाणञ् [४, १, १५] इति डापा व्यवहितस्यापि ङीपो विधिः । तथा कालाध्वनोरत्यन्तसंयोगे [२, ३, ५] इति द्वितीया व्यवहितापि विधीयते । तथा न षट्स्वस्रादिभ्य [४, १, १०] इति द्वयोरपि टाप्ङीपोः प्रतिषेधः ।

अयं चार्थः प्रत्यासत्तिन्यायलभ्यः पठ्यते ।

ज्ञापकमप्याहुः । संख्याव्ययादेः [४, १, २६] इति ङीब्वचनम् । तद्धि बहुव्रीहेरूधसो ङीष् [४, १, २५] इति ङीषा व्यवहितो ङीविति पुनः क्रियते । प्रतिषेधोऽप्यनन्तरस्यैव भवतीत्यत्र न क्तिचि दीर्घश्च [६, ४, ३९] इति दीर्घग्रहणं ज्ञापकम् । तदप्यनया परिभाषया यन्तिः सन्तिरित्यत्रानन्तरस्यानुदात्तो-

पदेश [६, ४, ३७] इत्यस्यैव प्रतिषेधः स्यात् । न व्यवहितस्य क्विप्त्वोः क्ङिति [६, ४, १५] इत्यस्येत्येवमर्थं क्रियत इति ॥ ५० ॥

अकृतव्यूहाः पाणिनीयाः ॥ ५१ ॥

कृतमपि शास्त्रं निवर्त्तयन्ति ॥ ५२ ॥

विशिष्ट ऊहो निश्चयो व्यूहः । विशेषेणाकृतनिश्चयाः । पाणिनीयाः कृतमपि लक्षणं व्यभिचारयन्तीत्यर्थः ।

तेन पपुषः पश्येत्यत्र यद्यपि पपिवस्शब्दाच्छस् विहितस्तथाप्यकृतव्यूहा इति वचनात् । पपावस्असिति स्थिते संप्रसारणं संप्रसारणाश्रयं च कार्यं बलीयो भवतीतीड़ागमं बाधित्वा संप्रसारणम् । ततो वलादित्वाभावादिण् न भवति । अत्राङः । अस्त्विट् । उस्यपदान्तात् [६, १, ९६] इति पररूपत्वे सिद्धं पपुष इति । एतच्चायुक्तम् । उस्यपदान्तात् [६, १, ०६] इत्यत्रादित्यनुवृत्तेः । ननु तथापीटो यणादेशे कृते बहिरङ्गपरिभाषया संप्रसारणस्यासिद्धत्वाद्वलि लोपेन सिद्धम् । असांहितिकत्वाद्वलि लोपस्याचोरनानन्तर्य्येऽविधानान्नाजानन्तर्य इत्यत्र नास्ति । न च बहिरङ्गपरिभाषया यणादेश एव न प्राप्नोतीति वाच्यम् । नाजानन्तर्य्य इति वचनात् । अत्रोच्यते । अन्तरङ्गे वलि लोपे कर्त्तव्ये बहिरङ्गस्य यणादेशस्यासिद्धत्वाद्यणेव नास्ति कुतो वलि लोप इति । बहिरङ्गत्वं तु यणादेशस्य संहितापेक्षत्वात् । किं त्वेवं वर्त्तते वर्द्धते इत्यत्रातो ङितः [७, २, ८१] इति बहिरङ्गस्यैकादेशस्यासिद्धत्वाद्वलि लोपो दुर्घटः । अन्ये तु प्रयोजनमिदं निमित्तापायपरिभाषया सिद्धमित्याचक्षते । न चासिद्धपरिभाषया निमित्तसद्भावोऽस्तीति वाच्यम् । असिद्धव-

दवाभात् [६, ४, २२] इति भाधिकारीयायां परिभाषायां कर्त्तव्यायां बहिरङ्गस्य भाधिकारीयस्य संप्रसारणस्यासिद्धत्वादङ्गवैकल्येन परिभाषाया व्यापाराभावात्। ननु च व्याश्रयत्वात् कथमसिद्धवदत्राभात् [६, ४, २२] इत्यस्य व्यापारः। उच्यते। परिभाषायां यन्निमित्तं बहिरङ्गं संप्रसारणादि तस्य यन्निमित्तं स्वादि तद्दसोः संप्रसारणम् [६, ४, १३१] इत्यस्यापि। परम्परयापि यन्निमित्तं तदपि परिभाषाया निमित्तमाश्रीयते। भाधिकारीयकार्यमेतदर्थमेव सिद्धाधिकार इष्यते। अतोऽस्त्येव समाननिमित्तत्वमिति। अवश्यं चैतत्। पपुषः पश्येत्यादावातो लोप इटि च [६, ४, ६४] इति लोपार्थं व्याख्येयम्। न चात्रोस्यपदान्तात् [६, १, ९६] इत्यस्ति, तत्कर्त्तव्यतायां संप्रसारणस्यासिद्धत्वात्। एतच्चासम्यक्। अचोरानन्तर्ये संहिताधिकारीय उस्यपदान्तात् [६, १, ९६] इति कर्त्तव्ये नाजानन्तर्यं इत्यनया असिद्धपरिभाषाप्रतिषेधात्। एवं तर्ह्युस्यपदान्तात् [६, १, ९६] इत्यत्र प्रतिपदोक्तस्योसो ग्रहणे पपुष इत्यत्र लाक्षणिक उसि पररूपत्वं नास्ति। अत एवासिद्धवदत्राभात् [६, ४, २२] इत्यत्र न्यासकृतोक्तं प्रतिपदोक्तस्य ह्युसस्तत्र ग्रहणमिति। ननूस्यपदान्तात् [६, १, ९६] इत्यत्र लाक्षणिकपरिभाषाबाधात् सामान्यग्रहणमुक्तम्। उच्यते। एवं मन्यते। लक्षणपरिभाषाबाधो न कर्त्तव्यः। प्रयोजनाभावात्। अस्तु लक्षणपरिभाषा। न चैवं पपुषः पश्येत्यत्र छान्दसोदाहरणे सार्वधातुकसंज्ञापक्षे आतो लोप इटि च [६, ४, ६४] इत्यस्याभावाल्लाक्षणिक उस्युस्यपदान्तात् [६, १, ९६] इत्यस्याभावादाकारश्रुतिर्दूषणम्। आभ्य-

स्तयोरात [६, ३, ११२] इत्याकारलोपशङ्कान्दसत्वात्। यत ए-वासिद्धपरिभाषा नास्ति। तत एवापृक्त एकाल्प्रत्यय [१, २, ४१] इत्यत्र रक्षितेनोक्तम्। वेपृक्तस्येत्युच्यमाने न दोषो दर्विरित्यादावपृक्तत्वेपीति न वाच्यम्। तथा च राजकृत्वानमाचष्टे राजकृत्वयतीत्यत्रापि प्रसङ्ग इति। तथा जनसनखनक्रमगमो विट् [३, २, ६७] इत्यत्र रक्षितेनोक्तम्। इकारो वेरपृक्तस्य [६, १, ६७] इति विशेषणार्थ इति। असति तस्मिन् परलोकदृश्वयतीत्यत्र णिचि टिलोपे कृते वकारलोपः स्यात्। तस्मादिकारो विशेषणार्थ इति। एतदसिद्धं बहिरङ्गमन्तरङ्ग इत्यस्य टिलोपस्यासिद्धवदत्राभात् [६, ४, २२] इत्यसिद्धत्वेनाप्रवर्त्तनादुपपद्यते। यद्येवं युवोरनाकौ [७, १, १] इत्यत्र यदुक्तं रक्षितेनाङ्गसंज्ञानिमित्तयोर्यकारवकारयोर्ग्रहणेऽनुनासिकयोर्यकारवकारयोर्ग्रहणमनर्थकमेवेति। तदयुक्तम्। पूर्वोक्तक्रमेण राजकृत्वयति परलोकदृश्वयतीत्यत्रादेशप्रसङ्गात्। उच्यते। भाधिकारात्प्राग्य असिद्धाधिकारमाहुः। तन्मतेन वाह ऊठ्टिलोपयोराभाच्छास्त्रीयत्वन्नास्ति। अतोऽसिद्धपरिभाषायां कर्त्तव्यायामसिद्धवदत्राभात् [६, ४, २२] इत्यस्याप्रवृत्तिरित्यदोषः।

ज्ञापकं चात्र समर्थानां प्रथमाद्वा [४, १, ८२] इत्यत्र समर्थग्रहणम्। तथाहि। यद्येषा न स्यात्। तदा समर्थितसर्वकार्योत्तद्धितो यथा स्यादित्येवमर्थं समर्थग्रहणमनर्थकं स्यात्। गोरतद्धितलुकि [५, ४, ९२] इत्यत्रातद्धितग्रहणं केचिदाहुः। तद्धि सुब्लुकि माभूदित्येवमर्थं क्रियते राजगवीयतीति। अत्र च प्रागेव निष्पन्नष्टच् तदुत्तरकालं क्यचि सुब्लुकि यदा प्रवृ-

तोऽपि टच् निवर्त्तते तदा भवति ॥ ५२ ॥

इति सीरदेवकृतायां परिभाषावृत्तौ ऽध्यापादः ॥

निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ५३ ॥

एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य ॥ ५४ ॥

तेन सदव्ययतव्य[२, २, ११]इति षष्ठीसमासनिषेधे निरनुबन्धकस्यैव तव्यस्य ग्रहणं न तव्यतः। तथा दिव उत् [६, १,-१३१] इत्यत्र दिव्धातोरुत्त्वं न भवति । अक्षद्यूरिति । यतो नाव [६, १, २१३] इत्यत्रैकानुबन्धकस्य यतो ग्रहणं न द्व्यनुबन्धकस्य ण्यतः ॥

ज्ञापकं चात्र वामदेवाड् ड्यड्ड्यौ [४, २, ९] इति ड्यतो-ड्डित्वम् । तच्च न कर्त्तव्यम् । यस्येति च [६, ४, १४८] इति लोपेनैव वामदेव्यस्य सिद्धत्वात् । तत्कृतमनयोरस्तित्वं ज्ञापयति । तदुक्तम् । "सिद्धं यस्येतिलोपेन किमर्थं ययतौ डितौ । ग्रहणं मा तदर्थे भूद्वामदेव्यस्य नञ्स्वर" इति । के चित्प्रत्ययविषयां निरनुबन्धकपरिभाषामाहुः । एतत्तु जृव्रश्चोः क्त्वि [७, २, ५५] इत्यत्रानुन्यासकारेणोक्तम् । तथा च न कवतेर्यङि [७, ४, ६३] इत्यत्र न्यासकारेण लुग्विकरणपरिभाषयाऽऽदादिकस्य कौतेर्ग्रहणे सिद्धे कवतेरिति श्तिपा निर्देशस्तौदादिकस्य कुवतेर्ग्रहणनिरासार्थ इति यदुक्तं तदुपपद्यते । अन्यथाऽन्तरङ्गाया निरनुबन्धकपरिभाषाया विषये लुग्विकरणपरिभाषा कथमभिधीयते । अन्तरङ्गत्वं तु निरनुबन्धकपरिभाषाया उपदेश एव इत्संज्ञाप्रवर्त्तनात्, लुग्विकरणपरिभाषायास्तु बहिरङ्गत्वमुक्त-

रकात्वं विकरणानुक्तौ विधानात्। गणपाठविशेषपरिज्ञानाच्च। अन्ये तु सामान्येन निरनुबन्धकपरिभाषामाहुः। अत एवास्तेर्भूरित्यत्र श्तिपा निर्देशो वैचित्र्यार्थ उक्तो न्यासकृता न त्वसु क्षेपण इत्यस्य निरासार्थं इति। तन्निरासस्य निरनुबन्धकपरिभाषया सिद्धत्वात्॥

इयं च एकानुबन्धकपरिभाषा वसोः संप्रसारणम् [६, ४, १३१] इत्यत्र नोपतिष्ठते। वसोरुगित्करणसामर्थ्यात्। तेन वसुग्रहणे क्वसुवस्वोरुभयोर्ग्रहणं भवति। ननु चासति वसोरुगित्त्वे वसः संप्रसारणमित्युच्यमाने वस आच्छादन इत्यस्य वर्म्मवसः पश्येत्यत्रापि संप्रसारणं प्राप्नोति। नैतत्। वस आच्छादन इत्यस्य सानुबन्धकत्वात्। न च वस निवास इत्यस्य निरनुबन्धकस्य ग्रहणमाशङ्कनीयम्। तत्र क्विबाश्रयस्यैव संप्रसारणस्य सिद्धत्वात्। ननु वसोरुगित्त्वं विद्वानिवाचरतीति क्विबन्तात् क्त्वाप्रत्यये विद्वसित्वेत्यत्रोदितो वा [७, २, ५६] इति विकल्पेनेडागमार्थं कस्मान्न भवति प्रत्ययानुबन्धो ह्येष समुदायानुबन्ध एव। उच्यते। अनभिधानात् क्विबत्र नास्तीति न तदर्थमुगित्त्वमिति विदेः शतुर्वसुः [७, १, ३६] इत्यत्र रक्षितः। भाष्ये तु वसोरपि द्व्यनुबन्धकत्वमुक्तम्। तथा च विदेः शतुर्वसुः [७, १, ३६] इत्यत्र भाष्यम्। वसुरिति द्विसकारको निर्देश इति तत्रैकः श्रुत्यर्थोऽपरस्तु द्व्यनुबन्धकत्वार्थ इति। अन्ये त्वाहुः। अनुबन्धस्य स्थानिवद्भावेन वसुरपि नैकानुबन्ध इति। नैतत्। स्थानिवद्भावेन ह्यनुबन्धकार्याणामतिदेशो नानुबन्धस्यैव। स्यादेतदेकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति प्रतिषेधान्न ह्यत्र किं चिदेकानुबन्ध-

कमस्तीति वसोः संप्रसारणम् [६, ४, १३१] इत्यत्र रक्षितः। यद्येवं यद्भाख्यातमीङ् भ्रापः [७, १, १८] इत्यत्र रक्षितेन न हि स्थानिवद्भावेनानुबन्धो भवत्यपि तु कार्यं स्थानिवद्भावशास्त्रस्य स्थानिकार्यार्थत्वादनुबन्धास्य कार्यार्थो न तु कार्यायोति। तद्युक्तम्। यतस्तत्रापि पूर्वोक्तक्रमेण ह्यनुबन्धकप्रतिषेधादौट्स्थानिकस्यौङो ग्रहणं न स्यात्। एतन्न्यायानुसारेणैव गाङ्कुटादि[१, २, १]सूत्रे कै गै शब्द इत्यस्यैव ग्रहणं स्यादित्यवधारणं युज्यते। तथाहोणस्थानिको यो गादेशः स्थानिवद्भावेन सानुबन्धक इति तस्याप्यग्रहणम्। न चैवं वाच्यमेवं हि गाङादेशङकारो न कर्त्तव्यः। स्थानिवद्भावेनेणधातोरिवेङादेशगाशब्दस्याप्यग्रहणात्। यतोऽसति ङकारे निरनुबन्धकपरिभाषाया इहाव्यापारे प्रमाणं न स्यात्।

नन्वस्यां परिभाषायां सत्यामुत्करादिभ्यश्छः [४, २, ९०] नडादीनां कुक् च [४, २, ९१] इति नड्कीय इत्यादावेव निरनुबन्धकत्वादायन्नादि[७, १, २]सूत्रेणेयादेशः प्राप्नोति न तु छणादौ सानुबन्धकत्वात्तैत्तिरीयमिति। उच्यते। आयन्नादि[७, १, २]सूत्रे न प्रत्ययग्रहणमपि तु वर्णग्रहणम्। ननु नड्कीयादिसिद्ध्यर्थं नडादीनां कुक् च [४, २, ९१] इत्यनेन किमर्थं छप्रत्ययं कृत्वा कुगागमः क्रियते न नडादिभ्यः कुट् चेत्येवोच्येत। एवं हि नडादिभ्य इति पञ्चमीनिर्देशेन लाघवं भवति। तक्षणो नलोपश्चेति गणसूत्रं न कर्त्तव्यं भवति। पदसंज्ञयैव लोपस्य सिद्धत्वात्। तथा च तत्र रक्षितः। परादौ कुटि कृते तक्ष्णो नलोपश्चेति वचनमनर्थकम्। प्रत्ययादेस्तु विधीयमान ईयादेशो

न स्यादिति । अत्रोच्यते । ननु परादौ कुटि कृते स्वादिषु [१,-२, १७] इति पदसंज्ञयाऽवग्रहः प्राप्नोति । यथोक्तमेकादाकिनि-च्चासहाय [५, ३, ५२] इत्यत्राकिनिचि कर्त्तव्य आकिनिचो विधानमवग्रहनिरासार्थमिति । उच्यते । अयस्मयादिपाठात् भ-संज्ञां मन्यते मैत्रेयः । ननु चेदं न छन्दः । उच्यते । तत्र पाठब-लाद्भाषायामपि भसंज्ञा भविष्यति । अत एव टाङसिङसामि-नात्स्याः [७, १, १२] इत्यत्र नादेशे कर्त्तव्ये इनादेशविधानम-तिजरसिनेति सिद्ध्यर्थं न्यासे व्याख्यातम् । ननु तथापीयादेशो न स्यादिति कथं यावता प्रत्ययोपदेशकाल एवेयादेशेन भवि-तव्यम् । नैतत् । गृहीतागमा एवागमिन उपजायन्त इति क-कारादित्वं स्यादिति । ननु यदीयादेशेन न भवितव्यम् । तदा कुड़ागममकृत्वा छप्रत्ययमेव कुर्यात् नड़ादिभ्यश्छ इति । तस्मा-त्कुक्यपि कृते ईयादेशेन भवितव्यम् । उच्यते । एवं हि प्रतिप-त्तिगौरवं स्यात् ॥ ५४ ॥

तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ५५ ॥

स एवानुबन्धो यस्य स तदनुबन्धकः तस्य ग्रहणेऽन्यस्य त-च्छून्यस्य ग्रहणं न भवति ॥

तेन चङि [६, १, ११] इति चकारानुबन्धे द्विर्वचनं क्रियमा-णं तच्छून्येऽङि न भवति । अदर्शदिति ॥

अनुबन्धोच्चारणसामर्थ्यलब्धोऽयमर्थ इति ॥

सोऽनुबन्धो यस्य तस्य ग्रहणे स यत्र नास्ति तस्य ग्रहणं न भवतीत्यपरोऽस्यार्थ इत्याहुः ॥

तथा च स्वादिष्वसर्वनामस्थाने [१, ४, १७] इत्यत्रानया प्रथ-

मैकवचनग्रहणमुक्तं भवति रक्षितेन ॥ ५५ ॥

इति सीरदेवकृतायां परिभाषावृत्तौ रत्नपादः ॥

स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ५६ ॥

उदात्तादिस्वरविधौ व्यञ्जनमविद्यमानवत् स्यात् ।

तेन तव्यप्रत्ययादेस्तकारस्याविद्यमानत्वात् प्रत्ययादेरकारस्योदात्तत्वं भवति । कर्त्तव्यमिति । राजदृषदित्यत्र हलन्तत्वेऽपि समासस्य च [६, १, २२३] इत्यन्तोदात्तत्वम् । उदश्वित्वानित्यत्र ह्रस्वनुड्भ्यां मतुप् [६, १, १७६] इत्यनेन तकारेण व्यवधानाद्ध्रस्वात्परो मतुब् न भवतीति तस्योदात्तत्वं न भवति । अनया तु परिभाषया प्राप्नोति । तत्रास्या लक्ष्यस्थित्याऽनाश्रयणेन वृत्तिकृता समाहितम् । समासस्य [६, १, २२३] इत्यत्र तु भाष्येऽप्येतद्दोषपरिहारार्थं हलस्वरप्राप्ताविल्युक्तम् । अत्रोच्यते । अचः स्वरविधानाद्धल्स्वरप्राप्तिरेव नास्ति । तत्किमुच्यते हलस्वरप्राप्ताविति । तत्रोक्तम् । उच्चैरुदात्त [१, २, २९] इत्यादावच इति षष्ठीनिर्दिष्टं निवृत्तमिति । चोद्यञ्च यदत्रापद्यते तत्तत्रैव परिहृतमिति ।

ज्ञापकं चात्रानुदात्तादेः [४, ३, १४०] इत्यस्याञो बाधनार्थं बिल्वादिभ्योऽण् [४, ३, १३६] इति वचनं यदि व्यञ्जनं विद्यमानं स्यात्तदा बिल्वादयोऽनुदात्तादयो न भवेयुः । अनुदात्तस्याज्धर्मत्वादिति प्राप्तिरेव नास्ति । मयटो बाधनार्थं तु न वाच्यम् । मयड्बाधनार्थे ह्यस्मिन्बिल्वादिभ्योऽण् [४, ३, १३६] इत्यण्ग्रहणमनर्थकं स्यात् । तस्य चेदं प्रयोजनम् । पाटलि-

पुचशब्दोऽत्र पठ्यते। तस्मादण् यथा स्यात्। यथाप्राप्ताप्यनुशा-नेऽनुदात्तादेश्च [४, ३, १४०] इत्यञ् माभूदिति। अञस्तु ह-लादित्वादप्राप्तिरित्युक्तम्।

इमनिजादीनाञ्च चित्करणमस्या लिङ्गमुपपद्यते। अन्य-थेमनिचो हलन्तत्वादेतदन्तस्य स्वराप्राप्तेश्चित्त्वमनर्थकं स्यात्।

उदाहरणान्तरं चास्याः पौर्वार्द्धिकं दाक्षिणार्द्धिकमित्यत्र ठ-ञि ञ्नित्यादिर्नित्यम् [६, १, १९७] इत्याद्युदात्तं भवति। ठ-ञत्र दिक्पूर्वपदाट्ठञ् [४, ३, ६] इत्यनेन। अस्यार्थः। दिक्पूर्व-पदादर्द्धशब्दाट्ठञ्भवति चकाराद्यच्चेति। यद्येवं पूर्वपदग्रहण-मिह न क्रियतां, दिशष्ठञित्येवं वक्तव्यम्। अयं चार्थः। दिश उत्तरस्मादर्द्धशब्दाट्ठञ् भवतीति। न। दिशष्ठञित्युच्यमाने दि-शः स्वरूपग्रहणं स्यात् पूर्वपदग्रहणे तु कृते दिगित्यर्थग्रहणम्। तर्हि पूर्वग्रहणमेव क्रियताम्। अत एवार्थग्रहणं भविष्यति। यथा परावराधमोत्तमपूर्वाच्च [४, ३, ५] इत्यत्र परावराधमो-त्तमेभ्य इति कर्त्तव्ये पूर्वग्रहणं परार्द्धमित्यत्र ठञो बाधना-र्थमिति वृत्तावुक्तम्। नैतत्। पदग्रहणे सति पूर्वग्रहणादर्थग्रह-णे व्यवस्थापिते बहुपूर्वार्द्धमिति बहुपूर्वादर्द्धशब्दादपि ठञ् स्यात्। अत्रापि दिक्पूर्वस्यार्द्धशब्दस्य विद्यमानत्वात्। न हि पूर्वग्रहणेनार्थग्रहणं बहुपूर्वादिभ्यः प्रत्ययस्य निराकरणं चोभ-यं शक्यते कर्त्तुम्। पदग्रहणे तु कृते पूर्वादिशब्देभ्य एव भव-ति। तत्रैव दिशः पूर्वपदस्य विद्यमानत्वात्। बहुच्पूर्वादर्द्धश-ब्दात्तु न भवति। तस्यापूर्वपदत्वात्। तस्मात्पूर्वग्रहणं पदग्रहणं चोभयमपि कर्त्तव्यमिति। एवं च सति दिक्पूर्वपदाट्ठञ् [४,

२, ६] इत्यत्र यन्मैत्रेयेणोक्तम् । यथा पूर्वसूत्रे पूर्वग्रहणस्य प्रयोजनं व्याख्यातम् । तथात्रासत्यपि पदग्रहणे पूर्वग्रहणादेव स्वरूपग्रहणान्निरस्तमिति तन्न शोभनम ॥ ५६ ॥

युष्मत्पादः समाप्तः ॥ ३ ॥

क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च ॥ ५७ ॥

तद्यथा । मृदु पठति । शोभनं पचति ।

ननु किमर्थं नपुंसकत्वं कर्मत्वं चोभयमाश्रीयते । न नपुंसकत्वमेवास्तु तत एव मृदु पचतीत्यादि सिध्यति । सत्यम् । किं त्वसति कर्मत्वे मृद्वादीनां प्रथमान्तत्वात् सपूर्वायाः प्रथमाया विभाषा [८, १, २६] इत्यनेन ग्रामे मृदु ते पचतीत्यादौ विकल्पेन तेमयादिविधयः स्युः । द्वितीयान्तत्वे तु मृद्वादीनां तेमयादिविधयो नित्या भवन्ति । अथ किं न भवितव्यमेव ग्रामे मृदु ते पचति ग्रामे मृदु तव पचतीति रूपद्वयेन, भवितव्यमेवानन्वादेशे, सर्व एव वान्नावादयोऽनन्वादेशे विभाषा वक्तव्या इति वचनात् । अन्वादेशे त्वथो ग्रामे मृदु ते पचतीत्येव नित्यं भवति तद्यदि मृद्वादीनां प्रथमान्तत्वं स्यात् तदाऽन्वादेशेऽपि सपूर्वायाः प्रथमाया विभाषा [८, १, २६] इत्यनेन विकल्पः स्यात् । यथा अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलस्तव स्वमिति । तस्मात् कर्मत्वं नपुंसकत्वं चोभयं कर्त्तव्यम् ।

अयं चार्थो न्यायसिद्ध इत्याहुः । तथाहि मृदु पचतीत्यत्र पाकक्रियायाः प्रार्थनाध्यवसानादिक्रियया व्याप्यत्वात् कर्मत्वम् । तथाहि । कश्चित्फलमीप्सुः फलं पश्यति एतस्या एतत्फलमिति दृष्ट्वा प्रार्थयते ततस्तां कर्त्तुमध्यवस्यति । गम्यमाना च क्रि-

या कारकाणां निमित्तमिति गम्यमानायाः प्रार्थनादिक्रिया-याः पाकक्रिया कर्म भवति, अतस्तद्विशेषणं कर्मैव। क्रियाया-श्चासत्त्वभूतत्वात्तद्विशेषणं सामान्येन लिङ्गेन नपुंसकेनैव निर्देष्टुं युज्यत इति। ननु क्रियानिमित्तस्य कर्मत्वमुक्तं निमि-त्तं च सिद्धस्वभावम्। क्रिया च साध्यस्वभावा तत्कथं कर्मत्वं स्यात्। तर्हि तत्प्रत्यनुपूर्वमीपलोमकूलम् [४, ४, २८] इति क्रियाविशेषणकर्मद्वितीयान्ताट्ठग्विधानं ज्ञापयति। साध्यस्व-भावापि क्रिया प्रार्थनाध्यवसानादिक्रियां प्रति साधनत्वेनाश्री-यते॥ ५७॥

इति परिभाषावृत्तौ ठक्पादः॥ ४॥

इति चतुर्थोऽध्यायः॥ ४॥

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति॥ ५८॥

व्यपदेशिवद्भावोऽप्रातिपदिकेन॥ ५९॥

ग्रहणवतेत्युच्चारणवता प्रातिपदिकेन तदन्तविधिः प्रतिषि-ध्यते।

तेन नडादिभ्यः फक् [४, १, ९९] इति केवलादेव भवति। नाडायन इति। न तदन्तात्। सौत्रनाडिरिति।

व्यपदेशिवद्भावश्च प्रातिपदिकेन न भवति। क्रतूक्थादिसू-त्रान्ताट्ठक् [४, २, ६०] इतीहैव भवति संग्रहसूत्रमधीते सां-ग्रहसूत्रिकः। व्यपदेशिवद्भावेन केवलान्न भवति। सूत्रमधीते सौत्र इति।

ज्ञापिते एते परिभाषे येनविधिः [१, १, ७२] इति सूत्रे भाष्य-कृता। पूर्वादिनिः [५, २, ८६] इत्यस्यानन्तरं सपूर्वाच्च [५, २,

८७] इत्यनेन । तदुक्तम् । किमर्थं सपूर्वादिनिर्विधीयते । पूर्वशब्देन प्रातिपदिके विशेषिते तदन्तविधिना सपूर्वादपि भविष्यति । केवलाच्च व्यपदेशिवद्भावेनेति नार्थोऽनेन तत् कृतं ज्ञापनार्थम् । एतच्च ज्ञापयति एते परिभाषे ग्रहणवतेत्यादिके स्त इति । अत एव प्रत्ययविधौ ज्ञापितत्वाद्ग्रहणवतेत्यादिपरिभाषाद्वयं प्रत्ययविधिविषयमाख्याय गोस्त्रियोरुपसर्जनस्य [१, २, ४१] इत्यत्र तदन्तविधिना गोशब्दान्तग्रहणं व्याचक्षते । अन्ये च सामान्येन प्रत्ययविधौ चाप्रत्ययविधौ च परिभाषामाहुः । तथा च शेषो घ्यसखि [१, ४, ७] इति प्रतिषेधः केवल एव न तदन्ते अतिसखेरागच्छतीति । पुनस्तैतयोर्भाष्ये प्रत्याख्यानमुक्तम् । तदुक्तम् । आद्यायास्तावत्त्विदं विशेषणविशेष्यभावं प्रति यथेष्टत्वाद्विशेषणेन हि तदन्तविधिर्भवति न विशेष्येण । तत्र समासविधौ द्वितीयाश्रित [२, १, २४] इत्यादौ यत्सुप्सुपेति प्रकृतं न तच्छ्रितादिभिर्विशेष्यते, अपि तु तेनैव श्रितादयो विशेष्यन्ते श्रितादिभिः सुबन्तैरिति, तेन तदन्तविध्यभावान्न भवति कष्टं परमश्रित इत्यत्र समासः । प्रत्ययविधौ नडादिभ्यः फक् [४, १, ९९] इत्यत्र यत्प्रातिपदिकादिति प्रकृतं तेनैव नडादयो विशेष्यन्ते नडादिभ्यः प्रातिपदिकेभ्य इति तेनेह न भवति सूत्रनडस्यापत्यं सौत्रनाडिरिति । यत्र तु गृह्यमाणेन प्रकृतं विशेष्यते तत्र भवत्येव तदन्तविधिः । यथोपपदं प्रकृतं भयग्रहणेनाढ्यादिभिश्च विशेष्यते । अतस्तदन्तविधिनाऽभयंकरोऽनाढ्यंभविष्णुरिति, खग्रहणानुवृत्त्या व्यपदेशिवद्भावाच्च केवलेऽपि भवति भयङ्कर इत्याढ्यङ्करण इति च । क्तवत्वादिस-

चान्ताट्ठक्[४, २, ६०] इत्यत्र तदन्तविधिनैव तदन्तत्वे लब्धेऽन्तग्रहणं केवलान्माभूदित्येवमर्थम् । अन्यथा स्वमित्यस्यानुवृत्त्या केवलादपि स्यात् । अत एव व्यपदेशिवद्भावो न प्रवर्त्तते । किं त्वेवं गोकुलमित्यत्र स्वंग्रहणानुवृत्त्या व्यपदेशिवद्भावाच्चोपसर्जनह्रस्वत्वं प्राप्नोति तत्र तदन्तग्रहणसामर्थ्याद्व्यपदेशिवद्भावो न भवतीति भागवृत्तिकृता गोस्त्रियोरुपसर्जनस्य [१, २, ४८] इत्यत्र समाहितम् । स्वग्रहणानुवृत्तिश्च न सर्वेषां मता ॥ ५९ ॥

## समासप्रत्ययविधौ तदन्तविधिनिषेध उगिद्वर्णग्रहणवर्जम् ॥ ६० ॥

तेन श्रितादीनां सुबन्तविशेषणत्वेऽपि तदन्तविधेरभावात्कष्टं परमश्रित इत्यत्र समासो न भवति । तथा प्रत्ययविधौ सौत्रनाडिरित्यत्र फञ् भवति ।

उगिद्वर्णग्रहणवर्जमिति वचनात्तदन्तविधिनाऽतिभवतीति दाक्षिरिति भवति । अन्यथा विष्णुवाचिनोऽशब्दात्स्यात् ।

येनविधि[१, १, ७२]सूत्रे वार्त्तिकमिदं परिभाषारूपेण कैश्चित्पठ्यते । सिद्धं तु विशेषणविशेष्यभावयोर्यथेष्टत्वात् ॥ ६० ॥

## इतिपरिभाषावृत्तौ धात्वपादः समाप्तः ॥ २ ॥

## स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपि ॥ ६१ ॥

तेन कुटीर इत्यत्र लिङ्गातिक्रमः । अल्पकल्पमित्यत्र च लिङ्गवचनयोरुभयोरपि । पचतोरूपं पचन्तिरूपमित्यत्र वचनातिक्रमः ।

अपिशब्दान्नाप्यतिवर्त्तन्ते । कुत्सितोऽश्वोऽश्वक इति ।

ज्ञापकं चात्र पाचः स्त्रियामञ् [५,४,१४] इत्यत्र स्त्रिया-मिति वचनम् । लिङ्गानतिक्रमे हि स्त्रियामिति न कर्त्तव्यम् । कर्मव्यतिहारे णच् स्त्रियाम् [३,३,४३] इति णचः स्त्रियामेव विधानात् स्त्रियामञपि सिद्ध इति ।

एतस्या उदाहरणान्तरम् । द्विपदिका द्विशतिकेति पुंस्त्वन-पुंसकत्वयोरतिक्रमः । अत्र हि द्वौद्वौ पादौ ददाति द्वेद्वे शते ददातीति पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च [५,४,१] इति वुन्प्रत्ययोऽन्त्याकारलोपश्च । अत्र चोदयन्ति । ननु कि-मर्थमनेन वुन्विधीयते कन्नेव विधीयताम् । तेनापि हि द्विशति-केति सिध्यति । एवं च स्थूलादिभ्यः प्रकारे कन् [५,४,३] इति कन्ग्रहणं कर्त्तव्यं न भवति । एतदेव चानुवर्त्तिष्यते । उच्यते । यदि कन् विधीयेतान्त्यलोपे कृते द्विशतिकेति न स्यात् । तथा कनि भसंज्ञाभावाद्विपदिकेति भसंज्ञानिबन्धनः पादः पत् [६, ४,१३०] इति पद्भावो न स्यात् । अथास्तु पद्भावस्तथापि द्विपदि-केति न स्यात् । पद्भावस्य हलन्तत्वात् द्विपत्केति स्यात् । एवं च यत्तत्र रचितेनोक्तम् । कन्विधानेऽपि सिध्यति द्विशतिकेति स्थूलादिभ्यः प्रकारे कन् [५,४,३] इत्येतत्कर्त्तव्यं न भवति । द्विपदिकेति तु भसंज्ञानिमित्तपदादेशाभावाद् रूपं च न सिध्य-तीति तदयुक्तम्, कन्प्रत्ययेऽन्त्यलोपे च कृते द्विशतिकेत्येतदपि न सिध्यति । तत्कथमुच्यते कन्विधानेऽपि सिध्यति द्विशतिकेति । अथ लोपग्रहणमपि न कर्त्तव्यं तर्हि भसंज्ञानिमित्तपदादेशा-भावाद् रूपं च न सिध्यतीति यदुक्तं तदसङ्गतं स्यात् । तथा-हि यथा भसंज्ञा नास्ति तथा दकारान्तः पाच्छब्दोऽपि नास्ति

कार्यं वा तद्रूपञ्च न सिद्ध्यतीत्युच्यते । यावता ऽन्त्यलोपे कृते पदादेशे चाभ्युपगते सत्यन्त्यो यो ऽकारस्तस्येत्त्वे सति द्विपदिकेति सिद्ध्यत्येव । किं चोत्तरफक्किकायां लोपग्रहणं प्रत्याख्यातव्यमेव । अधुना तत्प्रत्याख्यानमयुक्तम् । उच्यते । रूपं च न सिद्ध्यतीति यदुक्तं तदुभयत्र वेदितव्यम् । ततो ऽयमर्थः । द्विशतिकेति न सिद्ध्यति द्विपदिकेति च न सिद्ध्यति । अन्ये त्वाहुरिह दुरवगमो मैत्रेयाभिप्रायः । न केवलमिहैवापि त्वन्यत्रापि । तथाहि विभक्तिपादे अधुना [५, ३, १७] इत्यत्र सूत्रे रक्षितेनोक्तम् । यद्ययमधुना प्रत्ययः स्यात्तदा पूर्वसूत्र एवाधुनाप्रत्ययं विदध्यात् । नाङ्गावनिपातनार्थमिदं वक्तव्यम् । इदम इश् [५, ३, ३] इतीशादेशे कृते यस्येति [६, ४, १४८] लोपे सत्यधुनेत्यस्य सिद्धत्वात् । तस्मादसावनिपातनार्थं यत्पृथग्योगं करोति ततो ऽनुमीयते नायमधुनाप्रत्ययः, तर्हि धुनैव । स्वे च विशेषो वृत्तिकृतो ऽभिप्रेतः । भाष्ये पुनरधुनाप्रत्यय एवायं यस्माद्दादिसूत्रे कथितः स्त्री अधुनेति प्रत्युदाहरणेन, तथा तु योगविभागो ऽनर्थकः अस्मिन्काले वस्तुनीति विवक्षायामिकोचि [७, १, ७३] इति नुम्माभूदिति ॥ ६१ ॥

शतपादः समाप्तः ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

## संप्रसारणं संप्रसारणाश्रयं च कार्यं बलीयो भवति ॥ ६२ ॥

तेन जुहावयिषतीत्यत्र क्ङः संप्रसारणम् [६, १, ३२] इति शाच्छासाह्वाव्या[७, ३, ३७] इति युकं बाधित्वा संप्रसारणम् ।

जुहुषतीत्यत्राभ्यस्तस्य [६, १, ३३] इति द्विर्वचनात्प्राक् संप्रसारणम्, जुहुवतुरित्यत्राकारलोपं बाधित्वा संप्रसारणपूर्वरूपत्वे एव भवतः। तेनाचि श्नुधातु [६, ४, ७७] इत्यादिनोवङ् सिध्यति। अन्यथाऽऽतो लोप इटि च [६, ४, ६४] इत्याकारलोपे सति तस्यासिद्धवदत्राभात् [६, ४, २२] इत्यसिद्धत्वादुवङ् न स्यात्। कथं तर्हि ब्रह्मशब्द उपपदे जिनातेर्ह्वातेरातोऽनुपसर्गे क [३, २, ३] इति के कृते ब्रह्मज्य इति स्यात्। यावताऽत्रापि जुहुवतुर्जुहुवुरित्युवङादेशवदियङा भवितव्यम्। न चात्रैरनेकाचोऽसंयोगपूर्वस्य [६, ४, ८२] इति यणादेशो वाच्यः। अङ्गस्यैकाच्त्वात्। तथा च ब्रह्मजिय इत्यनिष्टं रूपं स्यात्। उच्यते। सर्वत्र संप्रसारणिभ्यो डो वक्तव्य इति डप्रत्ययेन भवितव्यमिति। यथाह्वः प्रह्व इत्यत्रोक्तम्। अथ वा क्वचिदेषा न सर्वत्रेति। अत एव सखिवद्योरोदवर्णस्य [६, ३, ११२] इत्यत्र न्यासकृतोक्तम्। क्वचिदेषा न सर्वत्रेति। तेन ब्रह्मज्यः आह्वः प्रह्व इति कप्रत्यये संप्रसारणपूर्वरूपं बाधित्वा इकारलोपस्तस्यासिद्धत्वादियङुवङौ न भवतः। तथा चेको यणचि [६, १, ७७] इति कृते सिद्धं ब्रह्मज्य इत्यादि। ज्ञापकं चास्या भाष्ये लिट्यभ्यासस्योभयेषाम् [६, १, १७] इत्यत्रोभयेषां वचनमुक्तम्। तद्धि वव्रश्चेत्यादौ हलादिः शेषं बाधित्वा संप्रसारणं यथा स्यादित्येवमर्थं कृतं तेन कार्यान्तरं बाधित्वा संप्रसारणस्य प्रवर्त्तनादस्या अस्तित्वं गमयति। पुनश्चास्या भाष्ये प्रत्याख्यानमुक्तम्। जुहुवतुरित्यादौ पूर्वविप्रतिषेधेन संप्रसारणस्य संप्रसारणाश्रयस्य च सिद्धिः। किंतु व्याख्यानात् परिभाषाश्रयणमेव लघ्विति न्यासकारेण पुन-

रियं सप्तिवपोरोदवर्णस्य [६, ३, ११२] इत्यत्रावर्णग्रहणेन ज्ञापिता तस्यैतत् प्रयोजनमूढ ऊढवानित्यत्र संप्रसारणे पूर्वरूपत्वे चोकारस्यौत्वं माभूदिति । एतच्चाप्रयोजनम् । षत्वढत्वढलोपेषु संप्रसारणपूर्वरूपत्वाभ्यां परत्वादकारस्यौत्वे कृते संप्रसारणपूर्वरूपत्वं च करिष्याम इति न किं चिदनिष्टमापद्यते । तदेवमवर्णग्रहणमस्या ज्ञापकमिति । अथ जुहूषतीत्यत्रादेशप्रत्यययोः [८, ३, ५९] इति कथं मूर्द्धन्यः । यावता स्थानेद्विर्वचनपक्षे हस्रो द्विर्वचने कृते जुहूसादेशस्य शब्दान्तरत्वात् प्रकृतिप्रत्ययविभागो नास्ति । न च मूर्द्धन्यस्यैव द्विर्वचनम् । पूर्वत्रासिद्धम् [८, २, १,] इत्यसिद्धत्वात् । पूर्वत्रासिद्धीयमद्विर्वचन इति तु प्रायिकम् । उभौ साभ्यासस्य [८, ४, २१] इति वचनात् । उच्यते । तत्त्वाध्यवसायेन कार्यकारणात् प्रत्ययाश्रयं षत्वं भवति । तथैकाच् [८, ३, ३७] सूत्रे रक्षितः । तत्रायं साधारणश्च परिहारः सिच्प्रभृतीनां षोपदेशस्य सामर्थ्यात् स्तौतिण्योरेव [८, ३, ६१] इति स्तौतिग्रहणात् सिचो यङि [८, ३, ११२] इति प्रतिषेधाच्चैवं ज्ञाप्यते श्रुत्यभेदात्तत्त्वाध्यवसायेन स्थाने द्विर्वचनेऽपि कार्याणि क्रियन्ते । अन्यथा कः प्रसङ्गः षत्वस्य स्यादिति । अत्रोच्यते । ननु कथं सिचो यङि [८, ३, ११२] इत्यस्य ज्ञापकत्वमुक्तम् । यावतोपसर्गात् सुनोति [१, ३, ६५] इत्यादिना षत्वे प्राप्ते तन्निषेधार्थं तत् स्यात् । परिसेसिच्यत इति । एतच्च सिचो यङि [८, ३, ११२] इत्यत्र वृत्तावुक्तम् । उपसर्गात् सुनोति [८, ३, ६५] इति या प्राप्तिः सा पदादिलक्षणमेव षत्वप्रतिषेधमनन्तरत्वाद् बाधते न सिचो यङि [८, ३, ११२] इति तस्मादयं प्रतिषेधः सर्वत्रेति ।

उच्यते। सात्पदाद्योः [८, ३, १११] इति प्रतिषेधे प्राप्त उपस-र्गादि [८, ३, ११२] सूत्रेण षत्वं विधीयते। सात्पदाद्योः [८, ३, १११] इत्यनेन चादेशप्रत्यययोः [८, ३, १११] इत्यस्यैव प्रतिषेधः। आदेशप्रत्यययोः [८, ३, ५९] इत्यनेन च षत्वस्याप्राप्तिः। सका-रस्यानादेशत्वात्। नैतत्। स्थिते तथाविधोऽस्यार्थः। इदानीं पु-नरप्राप्तमेवोपसर्गादि [८, ३, ६५] सूत्रेण षत्वं विधास्यते। अ-नस्तत्प्रतिषेधार्थमेव सिचो यङि [८, ३, ११२] इति स्यात्। न च वाच्यं सात्पदाद्योः [८, ३, ५९] इत्यादेशप्रत्यययोः [८, ३, ५९] इत्यस्यापवादः। तस्मात्चर्यात्सिचो यङि [८, ३, ११२] इ-त्यप्यादेशलक्षणषत्वापवादः। यत उभयसम्भवे साहचर्यमुच्यते। अयं चादेशलक्षणषत्वापवादो न सम्भवतीत्यनुपपन्नं साहचर्य-म्। उच्यते। स्थानेद्विर्वचनपक्षे परिसेसिष्यत इत्यत्रापि यका-रवतः सिष्यभागस्य द्विर्वचने सेसिष्यादेशस्य सिज्व्यपदेशा-भावात्कथमुपसर्गादि[८, ३, ६५]सूत्रेण सिज्द्वारिका मूर्द्धन्य-स्य प्राप्तिर्यन्निषेधार्थं सिचोयङि [८, ३, ११२] इति स्यात्। अथ वा यद्यत्र सिचोऽयङि [८, ३, ११२] इति क्रियताम्। अयं चार्थः यङ्प्रत्ययं वर्जयित्वोपसर्गात् सिचः षत्वमिति ततः परिसेसिष्यत इति सिद्धे यत्सिचो यङि [८, ३, ११२] इति कृतं तदादेशप्रत्यययोः [८, ३, ६५] इत्यस्यापि प्रतिषेधार्थमिति। एतस्मिन्पादे ओमाङोश्च [८, १, ९५] इत्यत्र रक्षिते पूर्वपक्षो बहुलपादे पुरस्तादपवादपरिभाषायामुक्तः॥ ६२॥

## उभयत आश्रये नान्तादिवत्॥ ६३॥

एकः पूर्वपरयोः [६, १, ८४] इत्यतः पूर्वग्रहणानुवृत्त्याऽन्ता-

दिवच्च [६, १, ८५] इत्यनेनैकादेशः पूर्वस्य कार्यं प्रत्यन्तवत् परस्य कार्यं प्रत्यादिवत्क्रियते तत्र यथा शक्येत विधिः कर्त्तुमिति पूर्वस्यान्तवत्त्वेनामू इत्यत्रादसोऽसेर्दादु दो म [८, २, ८०] इति भवति तथा परस्यादिवत्त्वेनाम्नी वृक्षावित्यत्र प्रगृह्यत्वे भवतः। यत्र त्वेकादेश उभयमाश्रयति पूर्वं परं च तत्रोभयत आश्रये नान्तवत्त्वं नाप्यादिवत्त्वमिति वाक्यार्थः । तेन वृक्षमित्यत्रैकादेशस्य पूर्वग्रहणेनाग्रहणान्नाङ्गस्याकारान्तत्वं परग्रहणेनाग्रहणान्मकारस्य न सुप्त्वमिति दीर्घत्वाभावः। तथा प्रोह्यत इत्यत्रोपसर्गादृत धातोः [७, ४, २३] इति न भवति। अत्रेदं न वक्तव्यम्। एकादेशस्य पूर्वग्रहणेन ग्रहणे कृते एकदेशविकृतद्वारेण मकारमात्रस्य सुप्त्वमाश्रित्य दीर्घत्वेन भवितव्यमिति। यद्यत्रैकदेशपरिभाषा स्यादुभयताश्रयपरिभाषा निर्विषया स्यात् । इयं च परिभाषान्तादिवच्च [६, १, ८५] इत्यत्र भाष्यकारेण पठिता। तत्रोक्तो लौकिको न्यायः । यथोभयोस्तुल्यबलयोरेकः प्रेष्यो भवति अविरोधार्थी उभयोरपि कार्यं न प्रवर्त्तत इति ॥ ६३ ॥

## वर्णाश्रये विधौ नान्तादिवत्त्वम् ॥ ६४ ॥

तेन खट्वाभिर्मालाभिरित्यत्र पूर्वं प्रत्यन्तवत्त्वाभावादतो भिस ऐस् [७, १, ९०] इत्यैस्न भवति। तपरकरणं तु सोमपाभिरित्यत्र कृतार्थम्। तथा क्षयतेर्जुहावेत्यत्र संप्रसारणपूर्वरूपस्यानादिवत्त्वादात औ णल [७, १, ३४] इति न भवति। तथा अस्यै अश्वः अस्या अश्व इति आटश्च [७, १, ९०] इति न वृद्धिः ॥

इयं च परिभाषान्तादिवच्च [६, १, ८५] इत्यत्र भाष्ये पठिता। ज्ञापकं चास्याः षत्वतुकोरसिद्ध [६, १, ८६] इति तुग्विधाव-सिद्धवचनं कैयटेनोक्तम्। तथाहि। यद्येषा न स्यात्तदाधीत्येत्यत्र सवर्णदीर्घस्य परग्रहणेन ग्रहणे कृते ह्रस्वाश्रयस्तुक् सिद्धस्तुक्य-सिद्धवचनमनर्थकं स्यात्। नन्वस्यां सत्यां क्षीरपेणेत्यत्र पूर्वं प्र-त्ययन्तवत्त्वेनैकाजुत्तरपदे णः [८, ४, १२] इति णत्वं नित्यं न प्रा-प्नोत्येकाजाश्रयेण वर्णाश्रयत्वात्तत्र प्रतिषेध एव युक्तः। श्रिया-मित्यत्र परं प्रत्यादिवत्त्वाभावादियङ् स्यात्। यावेव पूर्वपरौ वर्णावाश्रित्यैकादेशः प्रवर्त्तते तद्वर्णाश्रयेऽन्तादिवद्भावो नेष्यते। अतिदेशस्य तत्रैव व्यापारात्तत्रैव प्रतिषेधो युक्तः। इह त्वेका-देश एव कृते यो वर्ण एकाजुत्तर आकारश्च तदाश्रयौ णत्वेय-ङ्विधी न तौ निवर्त्येते। तथा चाहुः। इहाद्यन्तशब्दयोरवयव-वचनत्वात्तदवयवकरणेऽस्यातिदेशस्य व्यापारो न तु तत्करण इति। तदेवं खट्वाभिरित्यादौ पूर्वं प्रत्यन्तवत्त्वेऽपि तदेकदेशता लभ्यते न तु तद्रूपतेति तत्कृत ऐस्प्रसङ्ग इति। एतदेव न्या-सकृतोक्तमताद्रूप्योऽयमतिदेश इति ॥ ६४ ॥

एकाच्पादः समाप्तः ॥ १ ॥

कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ ६५ ॥

इयं च प्रत्ययग्रहणपरिभाषाया अपवादः। यत्र संज्ञया स्व-रूपेण वा कृतो ग्रहणं भवति। तत्र गतिकारकपूर्वमपि गृह्यते न तु यतः प्रत्ययस्तदाद्येव।

तद्यथा क्षेप [२, १, ४६] इति क्तान्तेन समासः सगतिना सकारकेण च भवति। उदकेविशीर्णमवतप्तेनकुलस्थितमिति।

Digitized by Google

अषिनुष [५, ४, १५] इतीनुणन्तात्स्वगतेरण् भवति । सांराविण इति ॥

ज्ञापकं चास्या गतिरनन्तर इत्यनन्तरग्रहणम् । तेन क्तान्त उत्तरपदे पूर्वस्यानन्तरस्य गतिस्वरो विधीयते । उद्धृतमवधूतमिति न हि व्यवहितस्याभ्युद्धृतमिति । तत्र यदीयं परिभाषा न भवेत् तदा प्रत्ययग्रहणपरिभाषयैवोद्धृतशब्दे संघाते सक्तान्ते प्राप्तिरेव नास्तीति किमेतन्निवृत्त्यर्थेनानन्तरग्रहणेन तत्कृतं ज्ञापयत्यस्तीयं परिभाषेति । लिङ्गमात्रञ्चेदम् । कात्यायनभाष्यकाराभ्युपगमादेव सिद्धेयम् । अन्यथा कारकपूर्वग्रहणस्य ग्रहणे किं ज्ञापकं स्यात् । अनया परिभाषया कृत्तद्धितसमासाश्च [१, २, ४६] इत्यत्रापि कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं प्राप्नोति तत्र यत् समाधानं च तद्गतिकारकोपपदानां कृद्भिः समासवचनमित्यस्यां परिभाषायामुक्तम् । लक्ष्यवशादियं न प्रवर्त्तत इत्यपीति । तेन प्रज्ञासुकरः कट इत्यत्र खित्यनव्ययस्य [६, ३, ६६] इति ह्रस्वोऽरुर्द्विषदजन्तस्य [६, ३, ६७] इति च मुम्न भवति कूलमुद्रुज इतिवत् ॥ ६५ ॥

## समासान्तो विधिरनित्यः ॥ ६६ ॥

तेन भुवारण्याभ्रंसाधृतधनुषयाक्षय तृणवदित्यत्र धनुषश्च [५, ४, १३२] इत्यनङ् भवति । तथा बह्वाम्भि तडागानीत्यत्र ऋक्पूरब्धूः [५, ४, ७४] इत्यकारो न भवति ॥

ज्ञापकं चास्याः स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनामनाम च [६, २, १८७] इत्यत्राध्वग्रहणम् । तत्रापाच्च [६, २, १८६] इत्यतोऽपादित्यनुवृत्तावपादुत्तरस्याध्वनोऽन्तोदात्तत्वं यथा स्यादि-

ति क्रियते। यदि च नित्यः समासान्तः स्यात्तदोपसर्गादध्वन [५, ४, ८५] इति समासान्तेऽचि कृते चित्वादेवान्तोदात्तत्वं सिद्धमिति तत्राध्वग्रहणं न कुर्यात्। कृतं चातो ज्ञापयत्यस्तीयं परिभाषेति। तथा भाष्ये द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ [६, २, १९७] इत्यत्र सूत्रेऽकृतसमासान्तस्य मूर्द्धशब्दस्योपादानं लिङ्गम्। नित्ये हि समासान्ते यथा पादिति ददिति च पादस्य लोपोऽहस्त्यादिभ्य [५, ४, १३८] इति वयसि दन्तस्य दतृ [५, ४, १४१] इति कृतसमासान्तौ निर्दिष्टौ तथा मूर्द्धशब्दोऽपि द्वित्रिभ्यां ष मूर्ध्नः [५, ४, ११५] इति कृतसमासान्तो निर्दिष्टः स्यात्। ततश्च मूर्द्धस्विति निर्देशः स्यात्तस्मात्तथा चाकृतसमासान्तनिर्देशः समासान्तविधेरनित्यत्वं ज्ञापयति । तेन द्विमूर्द्धा त्रिमूर्द्धेत्यत्राप्युदात्तत्वं भवति। यतश्च ज्ञापितेयं परिभाषा भाष्ये। ततो यदुक्तम्। यस्मात्प्रत्ययविधि[१, ४, १३]सूत्रे भागवृत्तिकृता समासान्तो विधिरनित्य इति नैषा परिभाषा भाष्ये ज्ञापकाभावादिति तदयुक्तम्। ननु लाघवार्थं समासान्तनिर्देशो न कृतोऽन्यथा मूर्द्धस्विति गौरवं स्यात् । यद्येवं मूर्द्धपादृत्स्विति कुर्यात्। एवं च समासान्तक्रमो न लङ्घितो भवतीति ज्ञापितम्॥ ६६ ॥

बहुव्रीहिपादः समाप्तः ॥ २ ॥

## सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ६७ ॥

आनन्तर्यलक्षणो विधिस्तद्विघातस्य निमित्तन्न भवति। यस्यानन्तर्येण यो विहितस्तदानन्तर्यमसौ न विहन्तीत्यर्थः ॥

तद्यथा ग्रामणि ब्राह्मणकुलमित्यत्र ह्रस्वत्वे कृते तुग्न भव-

ति । नैतत्प्रयोजनम् । असिद्धं बहिरङ्गमन्तरङ्ग इत्यनेनैव सिद्ध-त्वात् । वृत्तौ पद्धताविन्यत्र तच्चीत्स घे: [१, ३, ११९] इत्यदादेशे कृते टाब् माभूदिति प्रयोजनम् । एतदपि न, अदादेशस्य तपर-त्वात् । तस्यैतत्प्रयोजनं वामनेनोक्तं टाब् माभूदिति । इदं तर्हि प्रयोजनम् । सतानि सच्चत्वारिणीति विभक्तिसंनिपातेन नुमि कृ-ते तस्य विभक्तिलुकं प्रत्यनिमित्तत्वात् ष्णान्ता षट् [१, १, २४] इति षट्संज्ञा न भवति । यदि स्यात्षड्भ्यो लुक् [७, १, २२] इति लुक्स्यात् । तथा कुम्भकारेभ्य इत्यत्रैत्वे कृते कृन्मेजन्त [१, १, ३९] इति न भवति ॥

इयं च परिभाषा कृन्मेजन्त इत्यत्र भाष्यकारेण पठिता । ज्ञापकमस्या न तिसृचतसृ [६, ४, ४] इति दीर्घप्रतिषेधवचन-म् । तद्धि सत्यामस्यां विभक्तिनिमित्तयोस्त्रिचतुरोः स्त्रियां ति-सृचतसृ [७, २, ९९] इति ऋकारान्तयोर्व्यवधानकारिणं ङीपं प्रत्यनिमित्तत्वाद्दीर्घप्राप्तौ प्रतिषेधवचनमुपपद्यते । अन्यथा तु ङीपा व्यवहितत्वान्नामि [६, ४, ३] दीर्घत्वाप्राप्तेः प्रतिषेधवच-नमनर्थकं स्यात् । ङीपश्च दीर्घादीर्घाभ्यामविशेषात् ॥

अनित्या चेयं कष्टाय क्रमणे [३, १, १४] इति निर्देशेऽका-रान्तनिमित्ते ङेर्य [७, १, १३] इति ये कृते यादौ सुपि च [७, ३, १०२] इति दीर्घकरणादाङः तेन । दाधिरित्यत्र यस्य [६, ४, १४८] इति लोपः सिध्यति । तथा या सा इत्यत्र टाप्प्रत्ययः । ननु कथं कष्टाय [३, १, १४] इति ज्ञापकं यावताऽतो दीर्घो यञीति यकारेण प्रत्याहारसामर्थ्यात् । कष्टाय [३, १, १४] इत्यत्र सुपि च इति दीर्घत्वं सिध्यति । उच्यते । प्रादीनां ह्रस्व [७, ३, ८०]

इत्यत्रागणान्ताः प्रादय इति दर्शने जानातीत्यत्र ज्ञाजनोर्जा [७, ३, ७९] इति जादेशे कृते ह्रस्वत्वं प्राप्नोति तन्माभूदित्येवमर्थं दीर्घान्तादेशविधानमुक्तम् । अन्यथा यदि जानातीत्यत्र प्वादीनां ह्रस्व [७, ३, ८०] इति ह्रस्वत्वेन भवितव्यम् । तदा ह्रस्वमेव क्रियात् ज्ञाजनोर्ज इति । ननु जायत इत्यत्र दीर्घश्रुत्यर्थं दीर्घान्तजादेशविधानं स्यात् । नैतत् । जभावेऽपि कृतेऽतो दीर्घो यञि [७, ३, १०१] इति दीर्घत्वमिति न शक्यते वक्तुम् । यदि पुनरागणान्ताः प्वादयो न भवन्तीति दर्शनम् । तदा जानातीत्यत्र प्वादीनाम् [७, ४, ८०] इति नास्ति । अकृतपरिभाषया वा ह्रस्वाभावोऽभिधीयते कृते वा ह्रस्वत्वे तु पुनरतो दीर्घो यञि [७, ३, १०१] इति दीर्घत्वम् । तदा यकारेण प्रत्याहारग्रहणसामर्थ्याद् दीर्घत्वं शक्यत एव वक्तुमिति नानित्यत्वे ज्ञापकम् । अनित्यत्वे त्वेतदेव ज्ञापकम् । नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति [८, २, २,] इति तुग्ग्रहणम् । यदीयं नित्या स्यात् तदा वृत्रहभ्यामित्यत्रानयैव तग् न भविष्यतीति तुग्ग्रहणमनर्थकम् ॥ ६७ ॥

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ ६८ ॥**

तेनाल्लोपोऽन [६, ४, १२] इति यथा सार्थकस्य भवति राज्ञो राज्ञेति । तथा निरर्थकस्य दध्नो दध्नेति । तथेन्हन्पूषार्यम्णां शौ [६, ४, १२] इति । यथा बहुदण्डीनि ब्राह्मणकुलानीत्यत्र भवति । तथा बहुवाग्मीनीत्यत्रापि स्यात् । तथाऽत्वसन्तस्य चाधातोः [६, ४, १४] इति । यथा सुपया इति । तथा निर्गत-

स्ततो निस्तना इत्यत्रापि भवति । मन [४, १, ११] इति ङी-
प्प्रतिषेधो यथा सुदामेत्यत्र भवति तथा सुप्रथिमेत्यत्रापि ।
इदं च कात्यायनवचनं परिभाषारूपेण पठ्यते । अर्थवत्परिभा-
षायास्त्वानित्यत्वमस्या मूलम् । तस्यानित्यत्वमप्त्रादि [६, ४, ११]
सूत्रे तृन्तृचोर्भेदेनोपादानाद्‌ज्ञः । तृन्तृचोर्भेदेनोपादानमर्व-
णस्त्रसावनञ [६, ४, १२७] इत्यर्वादेशतृशब्दपरिहारार्थम् ।
यदि त्वर्थवत्परिभाषा नित्या स्यात्तदार्थवत्परिभाषयैवार्वादे-
शस्य तृशब्दस्य निरासे सिद्धे तृन्तृचोर्भेदेनोपादानमनर्थकम् ।
कृतं च तदनित्यत्वे ज्ञापकम् । ननु किमर्थमर्वादेशतृशब्दग्रह-
णनिरासार्थं तृन्तृचोर्भेदेनोपादानम् । यावतास्तु तस्यापि ग्र-
हणम् । न चैवमर्वन्तावर्वन्त इत्यत्र दीर्घत्वं स्यात् । यतो नि-
त्यत्वान्नुमि कृते उपधाया विहितत्वाद्दीर्घत्वं न भविष्यति । उ-
च्यते । वा षपूर्वस्य निगमे [६, ४, ९] इत्यतः पूर्वग्रहणानुवृत्तेर्नु-
मः प्राग् दीर्घत्वमेव भविष्यतीति मन्यते । एतच्चावश्यं वक्तव्य-
म् । अन्यथा बहूनि तडागानीत्यत्रापि नुमि कृते दीर्घत्वं न
स्यात् ॥

अन्यस्त्वाह तृन्तृचोर्भेदेनोपादानं सामान्येऽपि निर्देशे क-
श्चिद्विशेषो गृह्यत इति ज्ञापनार्थम् । तेन न कोपधाया [६,
३, ३७] इत्यत्र सामान्योक्तावपि तद्धितवुसम्बन्ध्येव ककारो
गृह्यते न ककारमात्रम् । तेन कोपधप्रतिषेधे तद्धितवुग्रहणं
कर्त्तव्यमित्येतद्वक्तव्यं न भवति । एतन्मते परिभाषाया अनि-
त्यत्वे आनिलोट् [८, ४, १६] इत्यत्र लोड्ग्रहणं ज्ञापकम् । त-
थाहि । प्रवपाणि मांसानीत्यत्रानर्थकत्वादेव णत्वाभावः सिद्ध

इति ॥ ९८ ॥

वार्णादाङ्गं बलीयः ॥ ९९ ॥

वर्णकार्यादङ्गकार्यं बलीयस्त्वाद् भवति। तेन भवतीत्यत्र यणादेशं बाधित्वा गुण एव भवति ॥

परिभाषा चेयं सप्तमेषा समानाश्रय इति, तेन व्याश्रये न प्रवर्त्तते, तेन सिवेरौणादिके न प्रत्यये स्योन इत्यत्र सिउन इति स्थितेऽन्तरङ्गत्वाल्लघूपधगुणं बाधित्वा यणेव भवति। अत्र चार्थे च्छ्वोः शूडनुनासिके च [६, ४, १९] इत्यत्र सतुक्कस्य छकारस्योपादानं लिङ्गम्। यदि व्याश्रयेऽपि प्रवर्त्तते तदा छकारनिमित्तं वर्णतुकं बाधित्वा विश्न इत्यादावनुनासिकनिमित्त आङ्गश्छकारस्य शकारः स्यात्तत्र कृते निमित्ताभावान्नास्ति तुगिति किं सतुक्कछकारोपादानेनेति। न चासिद्धपरिभाषया तुगाशङ्कनीयः। तुकः पूर्वमेव बाधितत्वात्। न्यासकारेण तु सार्वधातुकमपित् [१, २, ४] इत्यत्र व्याश्रयेऽपीयमुक्ता, यदाह च्यवन्ते स्रवन्ते इत्यत्र वार्णादाङ्गं बलीय इत्येकादेशात् प्राग्गुण इति। तत्रास्याः क्वचिद्व्याश्रयेऽपि प्रवृत्तिरित्यत्रार्थे यजयाचयतविच्छप्रच्छरक्षो नङ् [३, ३, ९०] इत्यत्र नङो ङित्करणं गुणप्रतिषेधार्थं क्रियमाणं ज्ञापकम्। अन्यथा हि विच्छेस्तुकि सति गुणप्रसङ्ग एव नास्तीति नङो ङित्करणमनर्थकं स्यात् ॥

ज्ञापिता चेयं परिभाषाऽभ्यासस्यासवर्णे [६, ४, ७८] इत्यासवर्णग्रहणेन, तद्ध्येवमर्थं क्रियते, ईषतुरीषुरूषतुरूषुरित्यत्र सवर्णेऽचीयङुवङौ माभूतामिति। यदि च वार्णादाङ्गस्य बलीयस्त्वं न स्यात्। तदाऽन्तरङ्गत्वात्कृते सवर्णदीर्घत्वे इयङुवङोः

प्राप्तिरेव नास्तीति किमसवर्णेनेति तत्कृतं ज्ञापयत्यस्तीयं परिभाषेति। अत्रोच्यते । यदि सवर्णेऽचीयङुवङौ न भवतस्तदेयेषोवोषेत्यत्रापीयङुवङौ न प्राप्नुतः, यतोऽत्राप्यचः परस्मिन्पूर्वविधौ [१, १, ५७] इति स्थानिवद्भावादियङुवङोरस्य कर्त्तव्ययोः सवर्णस्य परस्याचो विद्यमानत्वमिति । एवं च विधेरभावादसवर्णग्रहणमनर्थकमेव । उच्यते । नात्र स्थानिवद्भावोऽस्त्यादिष्टादचः पूर्वत्वादभ्यासस्य । तथाहि । परत्वाद्गुणे कृते द्विर्वचनेऽचि [१, १, ५९] इति स्थानिवद्भावाद् द्विर्वचनम् । द्विर्वचने कृते स्थानिवद्भावविधौ द्विर्वचन एवेत्यवधारणाद्गुणः पूर्वरूपेणाऽवतिष्ठते । न पुनर्द्विर्वचनादुत्तरकालं पुनः क्रियते । तेनाचः परस्मिन् [१, १, ५७] इतीयङुवङोः कर्त्तव्ययोः स्थानिवद्भावो न भवति । यदि हि स्यात्तदार्त्तेरेवाभ्यासस्येयङादेशो विधेय इत्यर्त्तेरभ्यासस्येत्येव ब्रूयात् । इदमेवासवर्णग्रहणं यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवदित्यस्याः परिभाषाया मूलम् ॥ ६९ ॥

## यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवत् ॥ ७० ॥

यो ह्यचः परस्मिन् [१, १, ५७] इति स्थानिवद्भावः सोऽनादिष्टादचः पूर्वस्य कार्ये भवति। तेन पटयतीत्यत्र टशब्दाकारादनादिष्टादचः पूर्वो यः पशब्दाकारस्तस्याऽत उपधाया इति वृद्धिं प्रति लोपः स्थानिवद्भवति । आदिष्टादचः पूर्वस्य कार्ये तु न स्थानिवत्त्वं यथा वैयाकरणः सौवश्व इति । तेनैचोऽयवायाव [६, १, ७८] इति न भवति । अत्र ह्यचः पूर्वयोरैचोः सम्भवो

नास्ति यकारवकाराभ्यां पूर्वयोरिचोर्विधानात्। न्यासकृता त्व-सिद्धं बहिरङ्गमन्तरङ्ग इत्यनेन समाहितम्। तन्मतेनाचीक-रदित्युदाहार्यम्॥

आदिष्टादचः पूर्वस्य क चित् स्थानिवत्त्वमुपेयिवानितीड़र्थ-निपातनात्प्रतीयते। यदि ह्यादिष्टादचः पूर्वस्य कार्ये स्थानिव-त्त्वं न स्यात्तर्हीड़र्थनिपातनं वृत्तिकृतोक्तमयुक्तं स्यात्। त-थाहीणो द्विवचने कृते दीर्घ इणः किति [७, ४, ६९] इति दीर्घ-त्वे कृते ततः सवर्णदीर्घत्वेनैकाच्त्वादेव वस्वेकाजाद्घसाम् [७, २, ६७] इतीडागमः सिद्धः स्यादुपेयिवानित्यत्र। न च वाच्यं दीर्घ इणः किति [७, ४, ६९] इति दीर्घविधानसामर्थ्यात्सवर्ण-दीर्घत्वेन न भवितव्यम्। ईयतुरीयुरित्यत्र यणादेशे चरितार्थ-त्वात्। न च स्थानिवद्भावाद्दीर्घत्वप्राप्तिः। आदिष्टादचः पूर्वत्वाद्‌ द्विर्वचनस्य। यत एवादिष्टादचः पूर्वस्य क चित्कार्ये स्थानिवत्त्वं प्रवर्त्ततेऽत एव सवर्णविधिं प्रति न स्थानिवदिति प्रतिषेध उ-पपद्यते। शिपिढ पिपढीति। तथा यद्यप्युपधायां च [८, २, ७८] इत्यत्र दीर्घविधौ रियतू रियुरित्यत्र स्थानिवत्त्वप्रवृत्त्या यणादेशं कृत्वा द्विर्वचने कृतेऽचः परस्मिन् [१, १, ५७] इति स्थानिवद्भावान्न दीर्घ इति तदुपपद्यते॥

अयं चार्थोऽचः परस्मिन्पूर्वविधावित्यस्यार्थः परिभाषारूपेण पठ्यते। तत्राजपेक्षमादेशापेक्षं निमित्तापेक्षं वा पूर्वत्वमाश्रीयत इत्युक्तम्। तत्र यदाऽजपेक्षं पूर्वत्वं तदाऽयमर्थः। अजादेशः प-रनिमित्तकः पूर्वस्य विधौ स्थानिवत् कुतः पूर्वस्य विधौ स्थानि-वत्त्वमचः। तदेवमजपेक्षपूर्वत्वमस्या मूलम्। ज्ञापकं चात्रः।

अभ्यासस्यासवर्णे [६, ४, ७८] इत्यत्रासवर्णग्रहणम्। अत्स्मृदृत्व-रप्रथम्रदस्तृस्पशाम् [७, ४, ९५] इति वचनं वा। तेन हि सन्व-द्भावबाधनार्थमद् विधीयते। यदि चादिष्टादप्यचः पूर्वत्र कार्ये स्थानिवत्त्वं स्यात्तदाऽत्त्वमपि नैव कुर्यात्॥ ७०॥

## प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ ७१ ॥

तेन विदो लटो वा [३, ४, ८३] इति णलाद्यादेशविकल्पो यङ्लुगन्तस्यापि भवति। वेवेद। वेविदतुः। वेविदुः। वेवेत्ति। वेवित्तः। वेविदतीति॥

न्यायसिद्धत्वमस्या निष्ठा शीङ्स्विदि [१, २, १९] सूत्रे न्यासकृता दर्शितम्। तथा हि। स्थाने द्विर्वचनपक्षे स्थानिवद्भावात्प्रकृतिव्यपदेशः। द्विः प्रयोगे च स एव द्विरावर्त्त्यत इति युक्तं प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति। ज्ञापकमप्याहुः। ऊदुपधाया गोहः [६, ४, ८९] इत्यत्रोपधाग्रहणम्। ऊदोर्गोह इति लाघवार्थं वक्तव्ये यदुपधाग्रहणं करोति तद्यङ्लुकि जोगूहतीत्यत्र योऽभ्यासस्यौकारस्तस्य माभूदित्येवमर्थं क्रियते। एतच्च तदा स्यात्। यदि प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवतीति। ननु चोत्तरार्थमुपधाग्रहणं गमहनजनखनघसाम् [६, ४, ९८] इति। अन्यथाऽलोऽन्त्यस्य लोपः स्यात्। उच्यते। ज्ञापकवादिनो मते तत्रात इति ।नीस्य प्रतिपादयितव्यः। श्तिपा निर्देशे चैषा नोपतिष्ठते। तथा च स्मृतिः। "श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाज्ग्रहणं तत्र पञ्चैतानि न यङ्लुकि" श्तिपा निर्देश इन्धिभवतिभ्यां च [१, २, ६] इति। शपा भरज्ञपिसनाम् [७, २, ५९] इत्यत्र भर इति। अनुबन्धेन

श्रीङो रुट् [७, १, ६] इति । गणेन वनतितनोत्यादीनाम् [६, ४, ३७] इति । एकाज्ग्रहणेन एकाच उपदेशेऽनुदात्तात् [७, २, १०] इति । श्र्युकः क्किति [७, २, ११] इतीट्प्रतिषेधः । अत्र श्लोके किं चिदिति शेषः । यत्रैकाज्ग्रहणेन धातुर्विशेष्यते तत्परिग्रहणार्थम् । यत्र तु धात्ववयवस्य निर्देशो यथैकाचो द्वे प्रथमस्य [६, १, १] इत्यत्रैकाज्ग्रहणं यङ्लुङ्निवृत्त्यर्थं न भवति । तेन यङ्लुकि द्विर्वचनेन बोभवतीति सिध्यतीति यथाकथञ्चिदाह्नः । ननु भवतीत्यत्राकर्तृवाचिनि सार्वधातुके श्तिपि कथं शबुत्पद्यते । उच्यते । श्तिपः शित्त्वादकर्तृवाचिन्यपि शप् । नैतत् । शित्त्वस्यादेच उपदेशेऽशिति [६, १, ४५] इत्यात्त्वप्रतिषेधे चरितार्थत्वात् । रोदितिरित्यत्र रुदादिभ्यः सार्वधातुके [७, २, ७६] इतीडर्थत्वाच्च । किञ्चासति शित्त्व आर्द्धधातुकत्वात् श्तिपीट् स्यात् । अथ तितुत्रतथ [७, २, ९] इति प्रतिषेधादिडभावः । एवमप्यार्द्धधातुकत्वाण्णेरनिटि [६, ४, ५१] इति णेर्लोपः स्यादेव । एवं तर्हि इक्श्तिपौ धातुनिर्देशे वक्तव्याविति व्याचक्षाणेन न्यासकृतोक्तं शित्करणसामर्थ्याच्छबिति । उच्यते । शितः करणं यस्येति बहुव्रीहिणा शित्करणशब्देन भवतिनिर्देश एवोच्यते । तदयमर्थः । भवतीति निर्देशकरणसामर्थ्याच्छबिति । अन्यस्त्वाह । श्तिपि द्वौ शकारावनुबन्धौ लशक्वतद्धिते [१, ३, ८] इत्यत्रोपदेशानधिकारादित्संज्ञा । एतच्चानुन्यासकृन्मतमेकयोगनिर्दिष्टपरिभाषायामुक्तम् । तदेवं द्वितीयशित्करणसामर्थ्याच्छप् ॥ ७१ ॥

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ७२ ॥

अन्तरङ्गे कार्ये कर्त्तव्ये बहिरङ्गमसिद्धं भवति ॥

तेन पचावेदमित्यादौ बहिरङ्गस्याद्गुणस्यासिद्धत्वादेत ऐ न भवति। ग्रामणि ब्राह्मणकुलमित्यत्र ह्रस्वस्य पिति कृति [६, १, ७१] इति न तुक्। नाकुटो नापत्यमित्यत्र खरवसानयोः [८, ३, १५] इति न भवति। राजन्यच्चेत्यत्र संयोगान्तलोपो न भवति ॥

ज्ञापकं चात्र वाह ऊठ् [६, ४, १३२] इत्यूठो विधानम्। तत्र ह्युच्यते। प्रकृतं सम्प्रसारणमेव वकारस्य विधीयतां ततः पूर्वरूपत्वम्। ततो ण्विप्रत्ययस्य प्रत्ययलक्षणेनोकारस्यौकारो गुणस्ततो वृद्धिरेचीति वृद्ध्या सिद्धं प्रष्ठौहेति। अनकारान्ते चोपपदे छन्दसि वहेर्ण्विर्न दृश्यते। तत्किमूठो विधानेन तत् कृतं ज्ञापयत्यस्तीयं परिभाषेति। बहिरङ्गं सम्प्रसारणं भसञ्ज्ञानिमित्तप्रत्यये विधानात्तत्रान्तरङ्गेऽप्यन्तरङ्गे प्रत्ययाश्रये गुणे कर्त्तव्ये बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वादुकारो नास्तीति कथं गुणः स्यादिति ॥

अनित्या चेयं परिभाषा। तच्चानित्यत्वं नलोपः सुप्स्वर [८, २, २] इति तुग्विधौ नलोपस्यासिद्धत्वेन ज्ञापितम्। तथाहि। यद्यीयं नित्या स्यात्। तदाऽनयैव वृत्रहभ्यामित्यत्रान्तरङ्गे तुकि कर्त्तव्ये बहिरङ्गस्य नलोपस्यासिद्धत्वं सिद्धमेवेत्यनित्यत्वे ज्ञापकम्। ननु सिद्धे पुनर्यदसिद्धवचनं तन्नियमार्थं स्यात्। कृत्प्रत्ययलक्षणे तुक्येवासिद्धं न छलक्षण इति। तेन वृत्रहच्छत्रमित्यत्र तुकि कर्त्तव्येऽसिद्धं बहिरङ्गमन्तरङ्ग इति न प्रवर्त्तते। न च विधिनियमसम्भवे विधिरेव ज्यायानित्यस्ति, नियमज्ञापकयो-

रर्थद्वयापेक्षित्वेन तुल्यत्वात् । उच्यते । वृत्रहच्छत्रमित्यत्र नलो-पो न बहिरङ्गोऽपि तु तुगेव तको द्विपदाश्रयत्वात् । वृत्रहभ्या-मित्यत्र तु विभक्तिमाश्रित्य नलोप इति तत्र तस्य बहिरङ्गत्वम् । अनित्यत्वे चामू इत्यत्रैकादेशस्य बहिरङ्गस्यान्तरङ्गे उत्वे मत्वे च कर्त्तव्येऽसिद्धत्वन्न भवति । तथा पपुषः पश्येत्यत्र सम्प्रसार-णस्यासिद्धत्वादल्लक्षणो वस्वेकाजाद्घसाम् [७, २, ६७] इतीण् न भवति । अत्र चास्याः प्रवर्त्तनाभाव उपायान्तरमकृतव्यूहा इत्यत्रोक्तम् ॥ ७२ ॥

नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ७३ ॥

पूर्वापवादोऽयं योगः । अचोरानन्तर्ये बहिरङ्गपरिभाषा नास्ति । तेन बभ्रव इत्यादावेचोऽयवायाव [५, १, ७८] इति भ-वति । तथाऽक्षद्यूरित्यत्रेको यणचि [७, १, ७७] इति । यूनो म-घोन इत्यत्राकः सवर्णाङ्गुणो । यद्येवं पचावेदमित्यत्राप्येत ऐ प्राप्नोति । अत्राप्यचोरानन्तर्ये बहिरङ्गस्याङ्गुणस्य प्रवृत्तत्वाद-सिद्धं बहिरङ्गमन्तरङ्ग इत्यस्याः प्रतिषेधो युक्तः । नैतत् । अ-चोरानन्तर्ये सति यत्रोभयमन्तरङ्गं बहिरङ्गञ्च तत्रेयं प्रतिषि-ध्यते यथा बभ्रवोऽक्षद्यूरिति । तथाह्यत्र बहिरङ्गे प्रवृत्ते विद्य-मान एव गुण ऊठि वान्तरङ्गावयणादेशौ कर्त्तव्यतया विद्येते । पचावेदमित्यत्र बहिरङ्ग एकादेशे कृतेऽचोरानन्तर्यं निवृत्तमि-त्यचोरानन्तर्ये द्वयं न विद्यते । तत्कथमस्याः प्रतिषेधः । यद्येव-मधीत्य प्रेत्येत्यत्राप्येकादेशे कृतेऽचोरानन्तर्ये द्वयन्नास्ति कथं तदा षत्वतुकोरसिद्ध [६, १, ८६] इत्यस्य ज्ञापकतोपपत्तिः । तथाह्यत्र पूर्वं धातुरुपसर्गेण युज्यत इत्यत्र दर्शने दीर्घादुत्तर-

काशमन्तरङ्गे तुकि कर्त्तव्येऽचोरानन्तर्यं नास्ति । एवं तर्हि पूर्वं धातुः साधनेन युज्यत इत्यस्मिन् दर्शनेऽधीत्य प्रेत्येत्यत्र नाजानन्तर्य इत्युच्यते । एतद्दर्शने ल्योकादेशात् प्राग् ल्यपि कृतेऽचोरानन्तर्येऽन्तरङ्गं बहिरङ्गं च द्वयं विद्यत एव । न चास्मिन् दर्शनेऽन्तरङ्गत्वात्तुकि कृते षत्वतुकोरसिद्ध [६, १, ८६] इत्यस्यानर्थक्यम् । यथान्तरङ्गत्वं तुकस्तथा नित्यत्वं दीर्घस्य, तदेतयोर्नित्यान्तरङ्गयोः परत्वाद्दीर्घत्वं स्यात् । अथ वा पूर्वं धातुरुपसर्गेण युज्यते इत्यत्राप्यकृतव्यूहा इति प्रविभज्यान्वाख्यानेऽचोरानन्तर्यमस्ति । किं च षत्वतुकोरसिद्ध [६, १, ८६] इत्यत्र धातोस्तन्निमित्तस्यैव [६, १, ८०] इत्यत्र न्यासकृता व्याख्यातम् । संहिताधिकारीये कार्ये कर्त्तव्येऽसिद्धं बहिरङ्गमन्तरङ्ग इति नाजानन्तर्य इत्यनया बाध्यते । एत ऐ [३, ४, ९३] इतीदं प्रकरणान्तरविहितं कार्यमिति कुतस्तत्र कर्त्तव्ये प्रतिषेध उच्यते । एतदेव च्छ्वोः शूडनुनासिके च [६, ४, १९] इत्यत्र मैत्रेयेणोक्तम् । अचोरानन्तर्ये यत्तद् द्वयं प्राप्नोत्यन्तरङ्गं बहिरङ्गं च तत्रेयं प्रतिषिध्यते, इह तु कृत एव बहिरङ्गेऽचोरानन्तर्ये च निवृत्तेऽन्तरङ्गं प्राप्नोतीति कुतस्तस्याः प्रतिषेध इत्यादिना ग्रन्थेन । अस्यायमर्थः । अस्तीत्यध्याहार्यम् । तदयमर्थः । अचोरानन्तर्ये यत्र द्वयमस्ति बहिरङ्गं प्रवृत्तमन्तरङ्गं प्राप्नोत्यन्तरङ्गं प्रवृत्तं बहिरङ्गं वा तत्र बहिरङ्गपरिभाषा प्रतिषिध्यत इति ॥

ज्ञापकं चात्र षत्वतुकोरसिद्ध [६, १, ८६] इति तुक्येकादेशस्यासिद्धवचनम् । यद्यचोरानन्तर्येऽपि बहिरङ्गस्यासिद्धत्वं स्यात्तदाधीत्येत्यादावन्तरङ्गे तुकि कर्त्तव्ये पदद्वयाश्रितस्य सवर्ण-

दीर्घस्यासिद्धं बहिरङ्गमन्तरङ्ग इत्यत एवासिद्धत्वादसिद्धवचन-
मनर्थकं स्यात्, अनया चान्तरङ्गपरिभाषा न बाध्यत इत्यन्तर-
ङ्गपरिभाषायामुक्तम् ॥ ७३ ॥

संज्ञापूर्वको विधिरनित्यः ॥ ७४ ॥

तेन धाम स्वायम्भुवं ययुरित्यत्रोर्गुण [६, ४, १४६] इत्यस्या-
भावादुवङ् सिध्यति । तथा ज्योतिषमित्यत्रापत्यादिवृद्धिर्न भव-
ति । पञ्चबाणः श्विणोतीत्यत्र न गुणः । उदश्वित्वानित्यत्र श्वयतेः
क्विपि न सम्प्रसारणम् ॥

ज्ञापकं चात्र ओरोदिति कर्त्तव्ये ओर्गुण [६, ४, १४६] इति
गुणग्रहणम्, तथोतो वृद्धिर्लुकि हलि [७, ३, ८९] इत्यत्र औदि-
ति कर्त्तव्ये वृद्धिग्रहणम् । तेन स्तुयादित्यत्र वृद्धिर्न भवति । एवं
च क्ङिति च [१, १, ५] इत्यत्राचिनवमस्तुनवमितिसिद्ध्यर्थं वृ-
त्तौ यदुक्तं यासुटो ङिद्वचनं ज्ञापकं लकाराश्रयं ङित्त्वमादे-
शानां न भवतीति तदुपपद्यते । अन्यथा यासुटो ङिद्वचनं स्तु-
यादित्यत्रानिग्लक्षणवृद्धिप्रतिषेधार्थं स्यात्तत्कुतो ज्ञापकम् ।
ननु तथाप्यस्य ज्ञापकत्वमयुक्तं बिभुयुरित्यादौ जुसि च [७, ३,
८३] इति प्रतिषेधार्थत्वात् । एतन्नायुक्तम् । यतः सत्यपि ङित्त्वे
भवितव्यमेवात्र जुसि च [७, ३, ८३] इति गुणेन, क्ङिद्विषय
एव तस्यारम्भात् । न । येन नाप्राप्तिन्यायेन सार्वधातुकमपित्
[१, २, ४] इत्यनेन यत् ङित्त्वं तदेवानेन बाध्यते । न यासुडा-
श्रितमपि । उच्यते । यद्येतावत्प्रयोजनं स्यात् । क्सस्याचि [७,
३, ७२] इत्यतोऽचीत्यनुवर्त्त्याजादौ जुसि गुणो विधेय इति ।
यासुटो ङित्त्वं ज्ञापकमेव । अपिः पदार्थसम्भावना [१, ४, ९६]

इत्यत्र स्तुयादित्यत्र ङिच्च पिन्न भवतीति वचनाद्गुणाभावेन वृद्ध्यभावो व्याख्यातः । स्तुयादित्यकृत्सार्वधातुकयोः [७, ४, २५] इति न दीर्घः । सार्वधातुकयकारत्वात् । ननु चाचिनवमित्यादिसिद्ध्यर्थं ज्ञापकमभिधीयते । यावता पिच्च ङिन्न भवत्यनेन ङित्त्वाभावाद्गुणः सिद्ध एव । उच्यते । भाष्यमतमिदं न सूत्रकृतः । अत एव सेर्ह्यपिच्च [३, ४, ८७] इत्यत्र न्यास उक्तम् । सेर्हि ङिदिति क्रियमाणे स्थानिवद्भावेन पित्त्वं स्यादिति । अन्यथा तत्रापि ङिच्च पिन्न भवतीति कः प्रसङ्गः पित्त्वस्य स्यादिति । ननु यदि सूत्रकारस्यानपेक्षितमिदं ङिच्च पिन्न भवतीति तथा ब्रूताद्भवानित्यत्र पित्त्वस्य स्थानिवद्भावाद् ब्रुव ईट् [७, ३, ९३] इतीट् स्यात् । उच्यते । सत्यपि सम्भवे बाधनं भवतीति तातङो ङित्त्वेन तिपः पित्त्वं बाधनीयम् । एवं भिन्द्यादित्यत्रापि तिपः पित्त्वेन लिङो ङित्त्वस्य बाधितत्वात् ॥ ७४ ॥

## सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः ॥ ७५ ॥

तद्यथा । धीवरीत्यादौ ङीप्सन्नियोगशिष्टो वनो र च [४, १, ७] इति रेफादेशः पञ्चधीवेत्यादौ पञ्चभिर्धीवरीभिः क्रीतेत्यार्हीयस्य ठकोऽध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम् [५, १, २८] इति लुकि कृते लुक्तद्धितलुकि [१, २, ४९] इति ङीपो निवृत्तौ रेफस्यापि निवृत्तिः ॥

अस्याः परिभाषायाश्छेदादिभ्यो नित्यम् [५, १, ६४] इत्यत्र भाष्यकारेण न्यायसिद्धत्वमुक्तम् । तदुक्तम् । लौकिक एवायं न्यायः सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः । तद्य-

था देवदत्तयज्ञदत्ताभ्यामिदं कर्त्तव्यमित्युक्ते देवदत्तापाये यज्ञदत्तोऽपि न करोतीति । ज्ञापकमप्यस्या भाष्यकारेण बिल्वकादिभ्यश्छस्य लुक् [६, ४, १५३] इत्यत्र व्याख्यातम् । तत्र ह्युक्तं बिल्वकादिभ्य इति कुका निर्देशः, कुक् चाऽयं नडादीनां कुक् च [४, २, ९१] इति छप्रत्ययसंनियुक्तस्तस्य बिल्वादिभ्यः परश्छ एव सम्भवतीति बिल्वकादिभ्यो लुगित्युच्यमाने भसञ्ज्ञानिमित्तप्रत्यये छस्यैव लुग्भविष्यति किं छग्रहणेन तत्कृतं छस्यैव केवलस्य लुग्यथा स्यात् । अन्यथा सन्नियोगपरिभाषया कुकोऽपि निवृत्तिः स्यादित्येवमर्थम् । एवं चास्याः परिभाषाया अस्तित्वे ज्ञापकम् । अत्रोच्यते । ननु यदि बिल्वकादिभ्यो लुगित्युच्यते सामान्येन प्रत्ययमात्रस्य लुक्स्यात् । तथा च बिल्वकादित्यत्र सुपोऽपि लुक् स्यात् । उच्यते । इनस्तद्धितस्य [६, ४, १५०] इत्यस्मात्तद्धितग्रहणानुवृत्तेर्न भविष्यति । नन्वेवमपि बिल्वकस्यावयवो विकारो वा बैल्वक इत्यत्र कोपधाच्च [४, २, ७९] इत्यस्याणो लुक् प्राप्नोति । एवं तर्ह्यापत्यस्य च तद्धितेऽनाति [६, ४, १५१] इत्यतस्तद्धित इत्यनुवृत्तेस्तद्धितस्य भसंज्ञस्य तद्धिते परतो लुक् । एवमपि बिल्वके भवो बैल्वको बैल्वकस्येदं बैल्वकीयमित्यत्र प्राप्नोति । नैतत् । बिल्वकादिभ्यो यो विहितस्तस्मिन् लुगुच्यते । न चात्र बिल्वकाच्छो विहितोऽपि तु बैल्वकादिति ॥

अनित्या चेयम् । तच्चानित्यत्वं भस्याढे तद्धित इत्यढ इति पुंवद्भावप्रतिषेधेन ज्ञापितम् । तत्र ह्यढ इति किमित्युक्त्वा श्येनेयो रौहिणेय इति प्रत्युदाहृतम् । यदि चेयं नित्या स्यात् ।

तद्रा यस्येति च [६, ४, १४८] इति लोपे कृते सन्नियोगपरिभा-
षया नकारस्यापि निवृत्तिः स्यात् । ततश्च पुंवद्भावेऽविशेषादढ
इति प्रतिषेधोऽनर्थकः स्यात् । ननु कथमनर्थको यावता लोपे
सत्यचः परस्मिन् [१, १, ५७] इति स्थानिवद्भावेन प्रत्ययलक्षणेो-
नासिद्धपरिभाषया वा ङीप्सन्नियोगो विद्यत एव । एवं च सति
सन्नियोगपरिभाषाया अनुपस्थानान्नकारादेशो न निवर्त्तते ।
उच्यते । स्थानिवद्भावादिना कार्यं क्रियते । न तु लुप्तवर्णसन्नि-
धानं न चैवं सन्नियोगपरिभाषाया अनुपस्थानम् । अपायमात्रे
तत्प्रवर्त्तनात् । ज्ञापकमप्यस्यास्तादृशमेव । अन्यथा ङ्स्य लुक्य-
पि कृते कुको निवृत्तिर्न प्राप्नोति प्रत्ययलक्षणादिना तस्य वि-
द्यमानत्वात् ॥ ७५ ॥

ताच्छीलिके णेऽप्यणकृतं कार्यं भवति ॥ ७६ ॥

अणा कृतं कार्यमणकृतम् । तच्छप्रत्ययेऽपि भवति तेन चुरा
शीलमस्या इति छत्रादित्वाणप्रत्ययान्तादपि ङीभवति । चौरी
तापसी । ताच्छीलिके इति किम् । शीलिकामिभिच्याचरिभ्यो
णो वक्तव्यः । मांसशीला मांसभिक्षा । प्रज्ञाश्रद्धार्चावृत्तिभ्यो
णः [५, २, १०१] । प्राज्ञा ब्राह्मणीति । अत्राणकृतं ङीब् न भ-
वति ॥

कार्मस्ताच्छील्य [६, ४, १७२] इत्यत्र ज्ञापितेयम् । तत्र कर्म-
शब्दात्तच्छीलमित्यनुवर्त्तमाने छत्रादित्वाणप्रत्यये कार्म इति
निपात्यते । अत्रोच्यते । नस्तद्धित [६, ४, १४४] इति टिलोपेन
कार्म इति सिद्धे टिलोपार्थं निपातनमयुक्तम् । न चान्निति प्रकृ-
तिभावोऽस्ति, अपि तस्य विधानात् । एवं तर्ह्येनज् ज्ञापयत्य-

स्तीयं परिभाषेति । अत्रोच्यते । यदि ताच्छीलिकेऽण्कृतं कार्यं भवतीति किमर्थं तर्हि ताच्छीलिकेऽप्यण्प्रत्यय एव न विधीयते । एवं च ज्ञापकं कर्त्तव्यं न भवति । उच्यते । वैचित्र्यार्थं न कृतम् ॥ ७६ ॥

धातोः कार्यमुच्यमानं तत्प्रत्यय एव भवति ॥ ७७ ॥

धातोर्यत्कार्यमुच्यते तद्धातुप्रत्यय एव भवति ।

तेन सृजिदृशोर्झल्यमकिति [६, १, ५८] इत्यम् रज्जुसृड्भ्यामित्यत्र क्विबन्तानां सत्यपि धातुत्वे सुपि प्रातिपदिकप्रत्यये न भवति । तथाऽचि विभाषा [८, २, २१] इति गिरौ गिर इत्यत्र न भवति । तथोदकमग्भ्यां प्राणनग्भ्यामित्यत्र मस्जिनशोर्झलि [७, १, ६०] इति नुम् । यद्येवं यथा प्राणनग्भ्यामित्यत्र न नुम् । तथा नशेर्वा [८, २, ६३] इति नशधात्वाश्रितं कुत्वमपि पक्षे न स्यात् । उच्यते । पदस्य कुत्वविधानान्न धातुप्रत्ययाश्रितं कुत्वं नुमागमस्तु धातुप्रत्ययाश्रित एव । इमामेव परिभाषामवलम्ब्योपयट्काम्यतीत्यत्र काम्यचः ककारस्यानित्संज्ञा । श्रियौ श्रियो भ्रुवौ भ्रुव इत्यादौ प्रातिपदिकप्रत्ययेपीयङुवङौ भवतः । श्नोः सुपि [६, ४, ८३] इति वर्षाभ्वश्च [६, ४, ८४] इति सूत्रारम्भात् । परिव्यवेभ्यः क्रियः [१, ३, १८] भुवः प्रभव [१, ४, ३१] इति निर्देशाच्च । वार्त्तिककारास्त्वन्यादृशीं परिभाषां पठन्ति । धातोः स्वरूपग्रहणे तत्प्रत्यय एव कार्यविज्ञानमिति । अत्र हि पाठे दृग्भ्यां दृग्भिरित्यत्रानुदात्तस्य चर्दुपधस्यान्यतरस्याम् [६, १, ५९] इत्यत्रास्वरूपधातुग्रहणात् सुप्यप्यमागमः स्यात् । एतस्याचि विभाषा [८, २, १७] इत्यत्र मृजेर्वृद्धिः [७, २, ११४] इ-

न्यत्र च रक्षितेन व्याख्यातम् ।

एतस्याः परिभाषाया दाण्डिनायनादि [६, ४, १७४] सूत्रे भ्रौणहत्यशब्दे तत्वनिपातनं लिङ्गम् । तथाहि यद्येषा न स्यात् तदा हनस्तोऽचिण्णलोः [७, ३, ३२] इति ष्यञि तत्वं सिद्धमिति निपातनमनर्थकं स्यात् । अथोच्यते । निपातनमिदं कुत्वाभावार्थं स्यात् । उच्यते । न क्वादेः [७, ३, ५९] इति योगविभागेन कुत्वं भविष्यति । टिलोपार्थमपि न वाच्यम् । परत्वाट्टिलोपं बाधित्वा हनस्तोऽचिण्णलोः [७, ३, ३२] इति तस्य विद्यमानत्वात् । उपधावृद्ध्यभावार्थमपि न, आदिवृद्ध्योपधावृद्धेर्बाधितत्वात्, त्वाष्ट्रो जागत इति यथा । ञ्नित्यादिस्वरबाधनार्थमपि न । तस्येष्यमाणत्वात् ॥ ७७ ॥

इति सीरदेवकृतायां परिभाषावृत्तौ षष्ठस्याङ्कपादः ॥ ४ ॥

इति षष्ठाध्यायः ॥ ६ ॥

---

## तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ७८ ॥

यो यस्य मध्यपाती स तद्ग्रहणेन गृह्यत इत्यर्थः ।

तेन सर्वक इत्यत्र साकच्कस्यापि सर्वनामत्वे जसः शी [७, १, १७] इति शीभावः । तथा वैयाकरण इत्यत्राप्यैजागमे कृते तद्धितद्वारिका प्रातिपदिकसंज्ञा ॥

लौकिक एवायं न्यायः । तद्यथा भद्रग्राम इति । तत्राभद्रा अपि भद्रव्यपदेशं समासादयन्ति तथाऽमल्ला अपि मल्लव्यपदेशम् । ज्ञापकं चात्र नेदमदसोरकोः [७, १, ११] इत्यत्रा-

कोरिति पदम् । यद्येषा न स्यात्तदेमदसोः प्रतिषेध उच्यमानोऽकचि कृते इमकैरमुकैरित्यत्र शब्दान्तरत्वादेव न स्यात् । किमकोरिति प्रतिषेधेनेति । येन विधि [१, १, ७२] सूत्रे भाष्यकृतोक्तम् । यद्येवं कथं तर्हि स एव भगवान्नेदमदसोरकोः [७, १, ११] इत्यत्रेदमदसोः कादिति नियमं कृत्वा निषेधं प्रत्याख्यातवान् । उच्यते । अस्यायमभिप्रायः । माभूदिदमकोरिति ज्ञापकम् । एतत्तदोः सुलोपोऽकोरनञ्समासे हलि [६, १, १३२] इत्यत्र यदकोरिति पदं तद्भविष्यति । युवोरनाकौ [७, १, १] इत्यत्र । पश्यामाचष्टे पश्ययतीत्यत्र प्रस्तावे यद् दूषणादिकं तन् ङ्याप्पादेऽकृतव्यूहा इत्यत्रोक्तम् ॥ ७८ ॥

अबाधकान्यपि निपातनानि भवन्ति ॥ ७९ ॥

तेन पुराणप्रोक्तेषु [४, ३, १०५] इति निपातनस्य नित्यमबाधकत्वात् सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च [४, ३, २३] इति ट्युट्युलौ तुडागमोऽपिभवति । तथा च दधतः पुरातनमुनेर्मुनितामिति भारवेः, पुरातनीर्नदीरिति च माघस्य प्रयोग उपपद्यते ॥

ज्ञापकं चात्र त्रयाणामिति सिद्धये त्रेस्त्रय [७, १, ५३] इति सूत्रम् । यदि हि बाधकान्येव निपातनानि स्युस्तदा निजान्त्रयाणाम् [७, ४, ७५] इति सिद्धं स्यात् । यदा त्वबाधकान्यपि निपातनानि भवन्ति तदा त्रीणामिति प्रयोगनिवृत्त्यर्थं त्रेस्त्रय [७, १, ५३] इति सूत्रमर्थवद्भवति । अन्ये त्वाहुः । नेयं परिभाषा नापि भाष्यकारवचनम् । बाधकान्येव निपातनानीति सर्वादीनि [१, १, २७] इत्यादिसूत्रे व्याख्यातम् । अत एव तत्रैव

सूत्रे भागवृत्तिः पुरातनमुनेर्मुनितामिति । पुरातनीर्व्वदीरिति च प्रमादपाठावेतौ । गतानुगतिकतया कवयः प्रयुञ्जते न ते-षां लक्षणं चक्षुरिति ॥ ७९ ॥

**अङ्गाधिकारे तस्य तदुत्तरपदस्य च ॥ ८० ॥**

तेनास्थिदधीत्यादिना प्रियास्थना प्रियदध्नेत्यत्राप्यनङ् भवति ग्रहणवता प्रातिपदिकेनेत्यस्यायमपवादः ॥

ज्ञापकं चात्र युजेरसमासे [७, १, ७१] इत्यत्रासमासग्रहण-म् । तद्ध्यश्वयुगित्यत्र नुम्माभूदित्येवमर्थं क्रियते यदि चाङ्गाधि-कारे तदुत्तरपदस्यापि कार्यं न भवति तदा युजेर्नुम्यश्वयु-जि कः प्रसङ्गो यन्निषेधार्थमसमासग्रहणं स्यादिति ॥ ८० ॥

**प्रत्येकं वाक्यपरिसमाप्तिः ॥ ८१ ॥**

इह शास्त्रे प्रत्येकं वाक्यानि परिसमाप्यन्ते । यथा वृद्धिसं-ज्ञा प्रत्येकमादैचाम् । गुणसंज्ञा चादेङाम् ॥

लौकिक एवायं न्याय उभे अभ्यस्तम् [६, १, ५] इत्यत्र भा-ष्यकारेण व्याख्यातः । तदुक्तम् । देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते न पुनरुच्यते प्रत्येकमिति, अथ च प्रत्येकं भोज्यन्त इति । अत्र शब्दशक्तिरेव प्रमाणम् । ज्ञापकमप्यत्र पालुत्तम [७, १, ९१] इत्यत्रोत्तमग्रहणं णलो विशेषणम् । यदि हि प्रत्येकं वाक्यसम्बन्धो न स्यात्तदोत्तमग्रहणमिड्वस्मसां त्रिकेण सम्बद्धमिति णलः केवलस्य विशेषणं न स्यात् ॥ ८१ ॥

**क्व चित् समुदाये वाक्यपरिसमाप्तिः ॥ ८२ ॥**

यथा हलोऽनन्तराः संयोग [१, १, ७] इति संयोगसंज्ञावि-धानम् । एतदर्थं संयोग इति महती संज्ञा कृतेति न्यासकृ-

तोक्तम् । लौकिक एवायं न्यायो वृद्धिरादैजित्यत्र भाष्ये दर्शि-
तः । गर्गाः शतं दण्ड्यन्तामिति समुदायेनार्थिनो राजानो हिर-
ण्येन भवन्तीति । न चात्र प्रत्येकं दण्डयन्ति । अत्रापि शब्द-
शक्तिरेव प्रमाणम् । के चिदत्र युक्तिमाहुः । शतमत्र प्रधानं कर्म
गर्गास्तु गुणकर्म तदङ्गत्वात् । गुणभेदे च प्रधानभेदो न यु-
क्तः । ज्ञापकमप्याहुः । प्रथमयोः पूर्वसवर्णः [६, १, १०२] इत्य-
त्र प्रथमाद्वितीययोर्व्वचनषट्कयोः प्रयुक्तं प्रथमयोरिति प-
दम् । प्रथमाशब्दो हि यदि सुपां त्रिकस्य स्वौजसिति समुदा-
यस्य सञ्ज्ञा स्यात् । सामीप्याच्चामौट्शसिति त्रिकेषु प्रयुज्यते
तदा प्रथमयोरिति निर्देशः साधीयान् भवति । यदि तु प्रत्येकं
प्रथमाशब्दः स्यात्तदा सोरेकवचनस्य प्रथमाशब्देन ग्रहणं स्यात्
सामीप्याच्चाम इति लाघवार्थं स्वमोरित्येवं कुर्यात् । तस्मात्प्रथ-
मयोः [६, १, १०२] इति निर्देशेन समुदायेन वाक्ये परिसमा-
प्तिं बोधयति । यथेष्टं च पक्षयोराश्रयणम् । के चित्तु यथा वा-
क्यपरिसमाप्तिरित्याहुः । यथा गर्गैः सह न भोक्तव्यमिति प्रत्ये-
कं न भुज्यते समुदितैस्सेति । तेन स्वादिविधिवाक्यस्य बहुषु ब-
हुवचनम् [१, ४, २१] इत्यादिना कर्मणि द्वितीया [२, ३, २] इ-
त्यादिना च शास्त्रेणैकवाक्यतापत्तौ तत्र तत्राभिधीयमानावु-
पयुज्यते इति ॥ ८२ ॥

## अभेदका इह शास्त्रे गुणाः ॥ ८३ ॥

तेन वृद्धिरादैच् [१, १, १] इत्युदात्तस्वरितानामादैचां वृद्धि-
सञ्ज्ञासिद्धिः । लोके गुणानां भेदकत्वमभेदकत्वं च । यथैकमु-
दकमिदं शीतमिदमुष्णमिति गुणभेदाद्भिद्यते । अभेदकत्वं च

यथा देवदत्तो गौरो लोहितः कृष्णो वा वृद्धो वेति स्वामभि-
ख्यां न जहाति एवं च शास्त्र उभयग्रहणे प्राप्ते नियमोऽयम् ॥

अयं चार्थश्चतुरनडुहोरामुदात्त [७, १, ९८] इत्युदात्तग्रह-
णेन ज्ञापितः। तथाऽस्थिदधि [७, १, ७५] इत्यत्रोदात्त इत्यनेन,
लुङ्लङ् [६, ४, ७१] इत्यत्रोदात्तग्रहणेन च। यदि भेदकाः
स्युर्गुणास्तदोदात्तगुणयुक्त एवाकार उच्चारयितव्य इत्युदात्त-
ग्रहणमनर्थकं स्यात्। अतो ज्ञापकम् ॥ ८३ ॥

इति गुणपादः ॥ १ ॥

## औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ ८४ ॥

उपदेशे भव औपदेशिकः प्रयोगे भवः प्रायोगिकः, अध्या-
त्मादित्वाट्ठञ्। तयोर्मध्ये औपदेशिकस्यैव ग्रहणम् ॥

तद्यथा तरप्तमपौ घ [१, १, २२] इति प्रत्ययस्यैव तरपो घस-
ञ्ज्ञा। ब्राह्मणितरेति। न तु तरतेरप्प्रत्यये कृते यः प्रयोगस्त-
स्य नदीतर इति। यदि तु स्याद् घरूप [६, ३, ४३] इति ह्रस्वः
स्यात् ॥

ज्ञापकं चात्र श्वीदितो निष्ठायाम् [७, २, १४] इति श्विग्रह-
णम्। यदि प्रायोगिकस्यापि ग्रहणमभविष्यत् तदा सम्प्रसार-
णे कृते शूनः शूनवानित्यत्रोगन्तत्वादेव श्र्युकः किति [७, २,
११] इतीट्प्रतिषेधः सिद्ध इति श्विग्रहणं न कुर्यात्। एतच्चा-
युक्तम्। एकाच उपदेशे [७, २, १०] इत्यत उपदेशग्रहणानु-
वृत्तेः श्र्युकः किति [७, २, ११] इत्यनेनोपदेश उगन्तात्प्रति-
षेधः। शून इत्यत्र तु नोपदेश उगन्तत्वमपि तु प्रयोगे। तथा

च श्वीदितो निष्ठायाम् [७,२,१४] इत्यत्र रचितः । उपदेशग्रहणानुवृत्तेः श्र्युकः किति [७,२,११] इति प्रतिषेधो न प्राप्नोतीति श्विग्रहणमिति । उच्यते । ज्ञापकवादिनोऽयमभिप्रायः श्र्युकः किति [७, २, ११] इत्यत्रोपदेशाधिकारो न स्वीक्रियते । न चैवं तीर्णमित्यादाविट्प्रतिषेधाभावः प्राप्नोति । श्वीदितो निष्ठायाम् [७, २, १४] इत्यत्र श्विग्रहणेनोपदेशिकोगन्तादिट्प्रतिषेधात् । ननु श्विग्रहणमिट्प्रतिषेधार्थमयुक्तम् । उक्तेन इत्येतदुदो दित्त्वादेवेडागमाभावस्य सिद्धत्वात् । किं च परिभाषायाः प्रयोजनं नास्ति । तरप्तमपौ घ [१, १, २२] इत्यत्र तमपा साहचर्याल्लक्षणपरिभाषया च प्रत्ययस्यैव तरपो ग्रहणात् । तथोपदेशावस्थायां पकारस्येत्संज्ञालोपे कृते गुणपरवेलायां पकाराभावात्तरप्समुदायो नास्तीति कथं नदीतर इत्यत्र घसंज्ञाशङ्का । किं च यदीयं परिभाषाऽस्ति तदा किमुपदेशेऽजनुनासिक [१, ३, २] इत्यादावुपदेशग्रहणेन । उच्यते । आद्यस्तावन्न भवति प्रपञ्चार्थत्वात् । द्वितीयोऽपि न । उपायस्यानुपायतोपालम्भो न ह्युपाय गौरवमिति वचनात् । तृतीयोऽपि न । सर्वत्रैवेत्संज्ञायां लोपे कृते भूतपूर्वगत्या पकारमाश्रित्य संज्ञाविधानात् । चतुर्थोऽपि न । परिभाषाश्रयापेक्षया प्रक्रियालाघवार्थत्वात् ॥ ८४ ॥

## सर्वविधिभ्य इड्विधिर्बलवान् ॥ ८५ ॥

तेन श्वयित्वेत्यत्र सम्प्रसारणात् पूर्वमिडागम एव भवति । तथा च न क्त्वा सेट् [१, २, १८] इत्यकित्त्वात्सम्प्रसारणाभावः ॥

ज्ञापकं चात्र सनि ग्रहगुहोश्च [७, २, १०] इत्यत्रोकोऽनु-

कर्षणार्थं चकारकरणम् । अन्यथा रुरुदिषतीत्यत्रेको झल् [१, २, ९] इति सनः कित्त्वे श्र्युकः किति [७, २, ११] इत्येवेट्प्रतिषेधः सिद्ध इति किमुकोऽनुकर्षणार्थेन चकारेण, पश्यति त्वाचार्योऽन्यत्रेड्विधिर्बलवानिति प्रथमतस्तस्मिन्कृते झला-दित्वाभावात्कित्त्वं नास्तीत्युकोऽनुकर्षणं करोति ॥ ८५ ॥

## लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् ॥ ८६ ॥

तेन गापोष्टक् [३, २, ८] इत्यलुग्विकरणस्यैव पिबतेर्ग्रहणम् । न तु लुग्विकरणस्य पातेः । सत्सूद्विषादि [३, २, ६१] सूत्रे विद्ग्रहण एषा न प्रवर्त्तते । युजविद [८, २, ५६] इत्यकारान्तस्यो-पादानाद्गणे येऽकारान्ता विद्धातवो विद ज्ञाने विद विचारणे विद सत्तायामिति ते सर्वे गृह्यन्ते ॥

तस्यास्यास्तित्वे स्वरतिसूतिसूयति [७, २, ४४] इत्यत्र सूतिसूयत्योर्विकरणनिर्देशो ज्ञापकः । तच्च द्युक्तम् । सूङिति सा-मान्यनिर्देशोऽस्तु तत एवादादिकदैवादिकयोर्ग्रहणं भविष्य-ति । न सू प्रेरणे इत्यस्य । तत्किं विकरणनिर्देशेन, एवं तर्हि ज्ञा-पयत्यस्तीयं परिभाषा सूङ्ग्रहणे लुग्विकरणपरिभाषया दैवादि-कस्यैव ग्रहणं स्यात् नादादिकस्य, विकरणेनोभयोर्निर्देशः क्रि-यमाणोऽस्या ज्ञापको भवति । ननु च सूतिरिति श्तिपा निर्देशः क्व चित् श्तिपि पित्कार्यं न भवतीति ज्ञापनार्थः । तेन श्तिपो-ऽपित्त्वात् ङित्त्वेन सूति [७, २, ४४] इत्यत्र क्ङिति च [१, १, ५] इति गुणप्रतिषेधः सिध्यति । तथा मन्यकर्मण्यनादरे विभाषा [२, ३, १२] इत्यत्र मनुतेर्ग्रहणं माभूदित्यत्र मनुतेरिति गणा-

भावेन सिध्यति । उच्यते । सूतिसूयतीति विकरणनिर्देशः पि-त्वाभावं बोधयन्नेव परिभाषास्तित्वं ज्ञापयति, अन्यथा यदि विकरणनिर्देशस्य पित्वाभावज्ञापनमेव केवलं प्रयोजनं स्यात्तदा सूतीति निर्देशं कृत्वा सूङ्ग्रहणमेव कृतं स्यात् स्वरतिसूतिसू-ङ्धूञूदितो वेति । अत्रापि सूतिसूङोरुपादानं पित्वाभावज्ञा-पनार्थं भविष्यति । अत्र तु लुग्विकरणालुग्विकरणयोर्लुग्विकरण-स्यैव ग्रहणमिति विपरीतोऽर्थो न ज्ञाप्यते । न ह्यनिष्टार्था शास्त्रे प्रकृप्तिर्युज्यत इतिवचनात् । वेत्तेर्विभाषा [७, १, ७] इत्य-त्र वेत्तेरिति श्तिपा निर्देशाच्च । तस्य ह्येतत्प्रयोजनम् । लुग्वि-करणपरिभाषया रौधादिकस्य विद विचारणे इत्यस्य ग्रहणं माभूदिति । यदि च लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्यैव ग्रहणमिति स्यात्तदा विद इत्यपि कृते विद ज्ञान इत्यस्यैव ग्र-हणं भविष्यति किं श्तिपा निर्देशेन । न च यङ्लुग्निवृत्त्यर्थ-मिति वाच्यम् । शीङो रुट् [७, १, ६] इत्यत्र शीङोऽयङ्लुग्-ग्रहणेन साहचर्याच्च यङ्लुग्ग्रहणाभावसिद्धेः ॥ ८६ ॥

## वर्त्स्यत्प्रत्ययेऽह कार्याणि क्रियन्ते ॥ ८७ ॥

भविष्यन्तीं प्रवृत्तिमाश्रित्य कार्याणि क्रियन्त इत्यर्थः । य-था शदेः शित [१, ३, ६०] इत्यनेन भाविना शित्त्वेन शीयत इत्यत्रात्मनेपदम् । तथा निन्यतुर्निन्युरित्यत्र भविष्यदनेका-च्त्वेन द्विर्वचनात् प्रागेवैरनेकाचोऽसंयोगपूर्वस्य [६,४,८२] इति यणादेशः, अन्यथेयङ् स्यात् ॥

ज्ञापकं चात्र वस्वेकाजाद्घसाम् [७, २ ६७] इत्येकाज्ग्रहणम्, तद्धि लिटि द्विर्वचनस्यावश्यकत्वान्न कश्चिदेकाजस्तीति भवि-

ष्यदभ्यासलोपप्रवृत्तेरुत्तरकालं भावी य एकाच्तदर्थं कृतम्।
तदर्थता च तदा स्याद्यदि वत्स्यत्प्रवृत्त्येह कार्याणि स्युः। ननु
द्विर्वचनात्प्राग्यो धातुरेकाच् तदर्थमेकाज्ग्रहणं स्यात्। तत्क-
थमुक्तार्थस्य ज्ञापकम्। उच्यते। द्विर्वचनात्प्राक् सर्वे धातव ए-
काच एवेत्येकाज्ग्रहणमनर्थकं स्यात्। नैतत्। स्वादौ चिरिजि-
री पठ्येते प्रत्ययान्ताश्च येऽनेकाचो धातवस्तन्निवृत्त्यर्थत्वात्। अ-
सदेतत्। कास्यनेकाच इति वक्तव्यमित्यनेकाज्भ्यो नित्यमाम्वि-
धानात्। जागर्त्तेर्व्यावृत्त्यर्थं तर्हि स्यात्। जागर्त्तेर्त्त्युषविदजागृ-
भ्योऽन्यतरस्याम् [३, १, ३८] इति विकल्पेनाम्विधानात्। उ-
च्यते। यद्येतदर्थमेकाज्ग्रहणं स्यात्तदैकाज्ग्रहणमपनीय न
जागुरित्येवं ब्रूयात्। अयं चार्थः, जागर्त्तेर्वसोरिण्न भवति। न-
नूर्णोतिरपि व्यावृत्त्योऽस्ति। नैतत्। वाच्य ऊर्णोर्णुवद्भाव इति णु-
वद्भावातिदेशेनोर्णोतेरेकाच्कार्येण भाव्यमेवेति ज्ञापकमेव।
न। द्विर्वचने कृते यदैकाच्त्वं भवति तदैव तदर्थत्वात्। युक्तं
चैतत्। अन्यथा घसिग्रहणमनर्थकं स्यात्। घसिभसोर्हलि च [६,
४, १००] इति लोपात्प्राक् परत्वादेकाच इत्यनेनैवाचेडागमेन
भवितव्यम्। तत्र हि कृते गमहनजनखनघसाम् [६, ४, ९८] इ-
त्युपधालोपस्य द्विर्वचनेऽचि [१, १, ५९] इति स्थानिवद्भावात्सि-
द्धञ्जक्षिवानिति। उच्यते। ज्ञापकवादिनोऽयमभिप्रायः। एका-
ज्ग्रहणात्तावत्कृतद्विर्वचनानामिटा भवितव्यम्। स चेट् द्विर्वच-
नात्प्राग् यदि क्रियते तदा परत्वन्यायो न लङ्घितो भवति। तथा
च वस्वेकाजात् [७, २, ६७] इति सूत्रे रक्षितः, द्विर्वचनोत्पत्तेः
प्रागेव परत्वादिडागम इति। घसिग्रहणं तु प्रत्याख्यायत एवे-

ति । अथ वाऽन उपधालोपिनोऽन्यतरस्याम् [७, १, २८] इति भविष्यदुपधालोपिनो ङीब्विधानं ज्ञापकम् । अन्यथा सति ङीप्युपधालोपः सत्युपधालोपे च ङीबित्यसङ्गतिः स्यात् । अथ वर्त्स्यत्प्रवृत्त्येति कथम् । यावता संयोगे गुरु [१, ४, ११] इति गुरुसंज्ञाबाधनाल्लघूपधगुणो न प्राप्नोति । उच्यते । विहितविशेषणस्वीकारे लघूपधाद्विहितं यत्सार्वधातुकमार्द्धधातुकं वा तस्मिन् गुण इत्यदोषः । न चैवं कुण्डितेत्यत्र गुणप्रसङ्गः । धातुग्रहणेन धातूपदेश एव नुम्प्रवृत्तेः । विहितविशेषणेन तर्हि रुणद्धीत्यत्रापि गुणः स्यात् । एवं तर्हि नाभ्यस्तस्याचि पिति सार्वधातुके [७, ३, ८७] इत्यत्राज्ग्रहणात्संयोगे गुणो भविष्यति । अन्यथा हि नेनेक्तीत्यत्र गुणभावार्थमचीत्यनर्थकं स्यात् । नैवम् । अनेनेगित्यत्र गुणप्रतिषेधाभावार्थत्वादज्ग्रहणस्य । एवं तर्हि प्रकृतिप्रत्यययोर्हलोरानन्तर्ये गुरुसंज्ञा न भवति । त्रसिगृधिधृषिक्षिपेः क्नुः [३, २, १४०] इति क्नोः कित्करणात् । हलन्ताच्च [१, २, १०] इति लघूपधगुणप्रतिषेधार्थात् कित्त्वाच्च । तदुक्तम् । क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुण इति । यद्येवं दृढः स्थूलबलयोः [७, २, २०] इत्यत्र तर्हि न्यासे यदुक्तं तदसंगतम् । तत्र ह्युक्तम् । किमर्थं हकारलोपो निपात्यते । यावता हो ढः [८, २, ३१] इति ढत्वे कृते ढो ढे लोप [८, ३, १३] इत्येवं सिद्धं दृढ इति । सत्यं सिद्ध्यति । द्रढीयानित्यत्र तु रेफादेशो न सिद्ध्यति । र ऋतो हलादेर्लघोः [६, ४, १६१] इति कर्त्तव्ये ढलोपस्यासिद्धत्वाद् गुरुसंज्ञया लघुसंज्ञाबाधनात् । उच्यते । एवं मन्यते गुण एव कर्त्तव्ये गुरुसंज्ञा न प्रवर्त्तते । अतो रफादेशे क-

र्त्तव्ये स्यादेव गुरुसंज्ञा । तथा च कृप्तशिख इत्यत्र गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् [७, २, ७] इति गुरुत्वात् प्लुतो भवत्येव । एतच्चायुक्तम् । अतो हलादेर्लघोः [७, २, ७] इत्यत्र प्रत्युदाहृतमिटीत्येवापाक्षीदिति । तस्य ज्ञापकवैकल्यात् । तथाहि । यथा सिजिड़ादिर्न भवति तथा लघुरकारोऽपि, संयोगगुरुत्वेन लघुत्वस्य बाधनात् । तदेवमन्यते द्रढीयानित्यत्र ज्ञापकसिद्धं न सर्वत्रेति लघुसंज्ञया न भवितव्यम् । तथा कृप्तशिख इत्यत्रापि गुरुसंज्ञैव भवति । अथ वा यत्र प्रत्यये प्रकृतिहला संयोगस्तस्मिन्नेव प्रत्यये यदि लघुसंज्ञाकार्यप्राप्तिस्तदैव कुसनोः कित्वाज् ज्ञापकाद् गुरुसंज्ञा न भवति ज्ञापकस्य तुल्यत्वात् । तथाहि भेत्तेत्यादौ तृचि गुणप्राप्तिः । अपाक्षीदित्यत्रापि सिचि वृद्धिप्राप्तिः परस्मैपदग्रहणं तु सिचो विशेषणम् । द्रढयति द्रढीयानित्यत्र तु णावीयसुनि च रेफादेशो न तु क्ते । कृप्तशिख इत्यत्रापि न क्ताश्रयः प्लुतोऽपि तु प्रकृतिप्रत्ययसंयोगाश्रयः, अतोऽत्र गुरुसंज्ञैवेति । अन्यस्त्वाह । क्तोः कित्वाद्गुरुत्वेन लघुत्वं न बाध्यते । अपि तूभयसंज्ञासमावेशः क्रियते । तेन भेत्तेत्यादौ सत्यपि गुरुत्वे लघ्वाश्रयो भवत्येव गुणः । कृप्तशिख इत्यत्रापि गुरुसंज्ञाश्रयः प्लुतः । अपाक्षीदित्यत्रापि लघ्वाश्रया वृद्धिः स्यात् । र ऋतो हलादेर्लघोः [६, ४, १६१] इत्यनेन तु कुम्भीधान्यन्यायेन लघुसंज्ञकस्यैव ऋकारस्य रेफादेश इत्याशङ्कानिरासार्थं ढकारलोपनिपातनं न्यासकृतोक्तम् । अयं भावः । अन्यथा ढलोपस्यासिद्धत्वाद्गुरुसंज्ञकोऽयमृकारो न तु लघुसंज्ञक एवेति रेफादेशो न स्यात् ॥ ८७ ॥

**अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ॥ ८८ ॥**

अन्तरङ्गानपि नुमादीन् बाधित्वा बहिरङ्गो लुगेव प्रवर्त्तते। तेन गोमान् प्रियोऽस्य गोमत्प्रियः। गोमानिवाचरति गोमत्यते इत्यत्र सुपो लुकि कृते सर्वनामस्थानाभावान्नुम्न प्रवर्त्तते। प्रत्ययलक्षणं च नास्ति। न लुमताङ्गस्य [१, १, ६३] इति निषेधात्।

इयं परिभाषा प्रत्ययोत्तरपदयोश्च [७, २, ९८] इत्यत्र भाष्यकारेण ज्ञापिता। तच्च युक्तम्। तवायं त्वदीयो ममायं मदीय इत्यादौ छप्रत्यये तव पुत्रस्त्वत्पुत्रो मम पुत्रो मत्पुत्र इत्यादौ चोत्तरपदे विभक्त्याश्रयत्वात्त्वमावेकवचन [७, २, ९७] इत्यनेनैव त्वमौ भविष्यतः। समासोत्तरकालभावी लुग् बहिरङ्गः स पश्चाद् भविष्यति। न च निमित्तापायपरिभाषया त्वमावपि निवर्त्तेत। यतो बहिरङ्गस्य लुकोऽसिद्धत्वादियत एव निमित्ति, सिद्धौ पूर्वेण त्वमाविति किं प्रत्ययोत्तरपदयोश्च [७, २, ९८] इत्यनेन तदेतत्कृतं ज्ञापयति। अस्तीयं परिभाषेति। तेन त्वमौ बाधित्वा विभक्तिलुकि कृते विभक्त्यभावात्पूर्वेण त्वमौ न प्राप्नुत इति वचनमर्थवद्भवति। ननु त्वत्तरो मत्तर इति तरपि त्वमौ यथा स्यातामिति प्रत्ययग्रहणं स्यात् प्रातिपदिकमात्रादेव तरबादयः स्वार्थिका विधीयन्ते न तु सुबन्तात् समर्थाधिकारनिवृत्तेः। तथा च समर्थानां प्रथमाद्वा [४, १, ८२] इत्यत्र व्याख्यातं स्वार्थिकप्रत्ययावधिश्चायमधिकार इति। उत्तरपदग्रहणमपि कर्त्तव्यम्। तव पुत्रस्त्वत्पुत्रस्तुभ्यं हितं त्वद्धितमित्यत्र तवममौ ङसि [७, २, ९६] तुभ्यमह्यौ ङयि [७, २, ९५] इति बाधित्वा

त्वमौ यथा स्याताम् । अन्यथा यथा तव तुभ्यमित्यत्र तवतुभ्यौ भवतस्तथात्रापि स्याताम् प्रत्ययोत्तरपदयोश्च [७, २, ९८] इति सूत्रे तु कृते तयोरपवादौ त्वमावेव क्रियेते इति कथं ज्ञापकम् । उच्यते । आद्यस्तावददोषः । यतः स्वार्थिका अपि निवृत्तेऽपि समर्थाधिकारेऽन्तरङ्गत्वात् सुपि कृते सुबन्तादेव भवन्तीति व्यवस्थितम् । तथा च कुत्सित [५, ३, ७४] इत्यत्र सूत्रे भाष्यम् । स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह तत्समवेतं समवेतस्य च लिङ्गं संख्यां विभक्तिश्चाभिधाय ततः प्रियकुत्सनादिषु वर्त्ततेऽसौ विभक्त्यन्त इति । तस्मात्सुबन्तस्यैव प्रियकुत्सनादयोऽर्था विशेषणमिति सुबन्तादेव तरबादय इति युक्तमुक्तं प्रत्ययग्रहणं ज्ञापकमिति । ये तु मन्यन्ते तरबादिप्रकृतेस्तरबादिविधौ ङ्याप्प्रातिपदिकस्यैव स्वभावतः पुरुषाद्यथावृत्तित्वमित्यनवकाशत्वात् सुपं बाधित्वा प्रातिपदिकादेव तरबादिभिर्भवितव्यमिति तन्मते नैव तरबादिविधौ ङ्याप्प्रातिपदिकादित्यनुवर्त्तते इति वृत्तावुक्तम् । तथा स्वादिष्वसर्वनामस्थान [१, ४, १७] इत्यत्र राजतरो राजतम इत्युदाहृतम् । तन्मते प्रत्ययग्रहणं न ज्ञापकमित्याहुः । उत्तरपदग्रहणमेव ज्ञापकम् । द्वितीयोऽप्यदोषः । तथाहि यदि तवतुभ्यादेशं बाधित्वा प्रत्ययोत्तरपदयोस्येत्यनेन भवितव्यं तदोत्सर्गसमानत्वादपवादानां मपर्यन्तस्यैव तौ भविष्यतो न सर्वस्येति किं मपर्यन्तस्येत्यनुकर्षणार्थेन चकारेणेति । तवतुभ्यादेशबाधनया भवितव्यम् । तदा चकारेण मपर्यन्तस्येत्यनुकर्षणं यत्कृतं तदनर्थकं स्यात् । तस्यैतत्प्रयोजनं सर्वादेशार्थत्वे तु सर्वादेशः स्यात् । अतस्तन्निरासार्थं चकारेण मपर्य-

न्तस्येत्यनुकर्षणमुपपद्यते ॥ ८८ ॥

## इति परिभाषावृत्तौ सिचिपादः ॥ २ ॥

## सत्यपि सम्भवे बाधनं भवति ॥ ८९ ॥

क्वचिदिति शेषः । तेन वर्त्तमानक्तेन भूतक्तस्य बाधा, तथौ-निनिषतीत्यत्र द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य, तथा त्वाष्ट्रो जागत इत्यत्राद्यज्वृद्ध्या अचो ञ्णिति [७, २, ११५] इत्यस्यात उपधाया [७, २, ११६] इत्यस्य च बाधनम् ॥

लौकिक एवायं न्यायः । यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । ज्ञापकं चात्रानुशतिकादिषु पुष्करसच्छब्दपाठः । अन्यथा हि भिन्नविषयत्वादाद्यज्वृद्ध्योपधावृद्धिर्न बाधितव्येति सिद्धं पौष्करसादिरित्यनर्थः पाठो भवेत् । ननु पुष्करसदा जितमित्यत्रार्थे तेन दीव्यति खनति [४, ४, २] इति ठकि कृते पौष्करसादिक इत्यत्र ठकि वृद्ध्यर्थः पाठः स्यात् किंतु ह्युपधावृद्धिर्नास्ति ञ्णिति तद्विधानात् । उच्यते । ठगेवात्र नास्ति अनभिधानात् । केचित्तु विभाषा सुपो बहुच् पुरस्तात् [५, ३, ६८] इत्यत्र विभाषाग्रहणं ज्ञापकमाहुः । तन्न । यतो विभाषाग्रहणं कल्पबादीनां पक्षे विधानार्थं वृत्तौ व्याख्यातम् । अन्यथा ह्यसति विभाषाग्रहणे नित्यमेव बहुचि सति कल्पबादयो न स्युः । न च वाच्यम् । पूर्वदेशे बहुच् परदेशे कल्पबादयो भविष्यन्तीति । यतो बहुचि कृते तेनैवेषदसमाप्त्यर्थस्य द्योतितत्वादभिहितेऽभिधानं नास्ति किम्पुनर्द्योतिते द्योतनमिति कल्पबादयो न प्राप्नुवन्त्येव । एतच्च तत्र न्यासकृता व्याख्यातम् । न ह्यवश्यं देशकृत एव सामान्यविशेषयोर्विरोधो

भवति। किं त्वर्थकृतोऽपि बह्वचः कल्पबादिभिः समानोऽर्थ इति बह्वचा द्योतितत्वादभिहिते पुनरभिधानं नास्ति। किं पुनर्द्योतिते पुनर्द्योतनमिति तस्यार्थेत्यादिना ग्रन्थेनेति ॥ ८९ ॥

पर्जन्यवदिह लक्षणप्रवृत्तिः ॥ ९० ॥

इह पर्जन्यवन्मेघवल्लक्षणं प्रवर्त्तते। तदुक्तम्। कृतकारि खल्विदं शास्त्रं मेघवन्नाकृतकारि दहनवत्, दहनो हि दग्धं न दहति। तेन खट्वातकमित्यादौ दीर्घः सिद्ध्यति। मेघो हि जलेऽपि वर्षति। ज्ञापकं चात्र प्रवाहणस्य ढे [७, ३, २८] इत्यनेन प्रवाहणस्यापत्यं प्रावाहणेय इति शुभ्रादित्वाड् ढकि उत्तरपदवृद्धिविधानम्। तत्र पूर्वपदस्य प्रशब्दस्य विभाषोत्तरपदस्य तु वाहनस्य दीर्घस्याप्याकारस्य नित्यं वृद्धिः। ननु प्रवाहणेय इत्यत्रोत्तरपदवृद्धेः किं प्रयोजनम्। प्रवाहणेयीभार्य इत्यत्र वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे [६, ३, ३९] इति पुंवद्भावप्रतिषेधः प्रयोजनमिति चेत्। न। जातेश्च [६, ३, ४१] इत्यनेनैव तत्सिद्धेः। जातित्वं चास्य गोत्रं च चरणैः सहेति। जातेश्च [६, ३, ४१] इत्यत्र स्वाङ्गाच्चेत्यतोऽमानिनीत्यनुवृत्तेर्मानिनि पुंवद्भावनिषेधो नास्ति प्रवाहणेयमानिनी। ततस्तत्र न वृद्धिनिमित्तस्य [६, ३, ३९] इति पुंवद्भावप्रतिषेधार्थं वृद्धिविधानमिदमिति। यद्येवं कथं तत्र तर्हि न्यासकृता व्याख्यातं जातेश्च [६, ३, ४१] इति पुंवद्भावप्रतिषेधे सिद्धे वृद्धिनिमित्तस्य [६, ३, ३९] इति पुंवद्भावप्रतिषेधार्थं प्रवाहणस्य ढ इति वृद्धिविधानं जातेश्च [६, ३, ४१] इत्यस्यानित्यत्वं ज्ञापयति, तेन हास्तिकमित्यत्र जातेश्च [६, ३, ४१] इति पुंवद्भावप्रतिषेधो न

भवतीति । उच्यते । व्यक्तौ तदा ज्ञापकं बोद्धव्यम् ॥ ९० ॥

गर्भवट्टाबादयो भवन्ति ॥ ९१ ॥

यथा मध्ये गर्भस्तथा टाबादयः स्त्रीप्रत्ययाः प्रातिपदिकस्वाद्योर्मध्ये भवन्ति । का के का इति कादेशे कृते टाब्भवति । आदिग्रहणादवैयाक्सावनञ [६, ४, ९६] इति विभक्तौ चादेशे कृते उगितश्च [४, १, ६] इति ङीप् । अर्वत्यौ अर्वत्य इति के चिदाहुः । क्रोष्टुशब्दादिभक्तौ स्त्रियां च [७, १, ९६] इति तृज्वद्भावे क्रोष्ट्रीभ्यां क्रोष्ट्रीभिरित्यन्ये ॥

ज्ञापकं चात्र न यासयोः [७, ३, ४५] इतीत्त्वप्रतिषेधार्थं वचनम् । यदि गर्भवट्टाबादयो न स्युस्तदा विभक्तौ त्यदाद्यत्वे कृते गर्भवट्टापोऽभावात् यका सकेति न स्यात् । एवं च प्रत्ययस्थात् [७, ३, ४४] इतीत्त्वप्राप्तेरभावान्न यासयोः [७, ३, ४५] इत्यनर्थकं स्यात् । श्रीपुरुषोत्तमदेवेन तु व्याख्यातम् । ज्ञापकं च न यासयोरित्त्वप्रतिषेधवचनम् । यदि न गर्भवट्टाप् स्यात्तदा त्यदाद्यत्वे कृते सुपः परेण स्याद् यका सकेत्यत्र प्रत्ययस्थात् [७, ३, ४४] इतीत्त्वप्राप्तिरेव नास्ति सुपः परत्वादापः । तत्किं प्रतिषेधेनेति ॥ ९१ ॥

विधौ परिभाषोपतिष्ठते नानुवादे ॥ ९२ ॥

तेन क्ङिति च [१, १, ५] इत्यत्र क्ङितीत्यस्य गुणवृद्धिभ्यां सम्बन्धात्तस्मिन्निति निर्दिष्टे [१, १, ६६] इति परिभाषा नोपतिष्ठते । तेन क्ङिन्निमित्ते प्रत्यये निषेधाक्ङिन्निमित्यत्रापि निषेधः सिद्ध्यति ॥

प्रधानाप्रधानन्यायलभ्योऽयमर्थः । ज्ञापकं चात्रोदीचामातः

स्थान इत्यत्र स्थानप्रतिपत्त्यर्थं स्थानग्रहणम्। अव्यापिका चेयं संख्याव्ययादेः [४, १, २६] इत्यत्रादिग्रहणात्। अन्यथा संख्याव्ययाभ्यामित्येवोच्येत। अयं चार्थः। संख्याव्ययाभ्यामुत्तरो य ऊधःशब्दस्तदन्ताद्बहुव्रीहेर्ङीबिति। नन्वेवं संख्याव्ययाभ्यामुत्तर ऊधःशब्दान्तो यो बहुव्रीहिरिति स्यात्तत्रश्चेहैव स्यात्। पञ्चघटोध्नः। पञ्चघटोध्नीति। भवति ह्यत्र संख्याव्ययाभ्यामुत्तर ऊधःशब्दान्तो बहुव्रीहिः। उच्यते। प्रत्यासत्त्योधःशब्द एव संख्याव्ययोर्विशेष्यो न बहुव्रीहिः, तथाहि संख्याव्ययाभ्यामित्यत्रोधश्शब्द एव प्रत्यासन्नो नेतरः। नन्वेवमपि त्रिपदे बहुव्रीहौ न प्राप्नोति तदर्थं यत्न आस्थेयः॥ ९२॥

**प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणं भवति ॥ ९३ ॥**

तेन हेरचङि [७, ३, ५६] इति हिनोतेर्ण्यन्तादपि सनि कृते। जिघाययिषतीति कुत्वं भवति। अभिषावयति परिषावयतीत्यत्र तु सुनोतिमेव प्रति क्रियायोगो न तु सावयतिं प्रतीत्युपसर्गात्सुनोति [८, ३, ६५] इति षत्वमिति वृत्तावुक्तं न त्वनया परिभाषयेति॥

ज्ञापकं चात्र हेरचङि [७, ३, ५६] इति प्रतिषेधः। यदि प्रकृतिग्रहणे ण्यधिकस्य ग्रहणं न स्यात्। तदा केवलस्य हिनोतेरङ्गस्याभ्यासनिमित्तप्रत्यये कुत्वमुच्यमानं कः प्रसङ्गो ण्यधिके स्यात्। यदर्थमचङीति प्रतिषेधः क्रियत इति॥

अव्यापिका चेयम्। न भादि [८, ४, ३४] सूत्रे ण्यन्तानां भादीनामुपसंख्यानमिति वचनात्। तेनार्हे [३, २, १२] इत्यत्र ण्यन्तस्यार्हतेर्ग्रहणं न भवतीति रक्षितेनोक्तम्॥ ९३॥

**अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्न्निष्ठितस्य ॥ ६४ ॥**

अङ्गकार्यस्य वृत्तिः प्रवृत्तिरङ्गवृत्तिस्ततो हेतोर्न्निष्ठितस्य प्रयोगार्हस्याङ्गस्य पुनरङ्गकार्यप्रवृत्तावविधिरविधानं भवति। अङ्गवृत्ताविति सप्तमी षष्ठ्यर्थे। पुनरङ्गकार्यवृत्तेरविधिरविधानमनिष्पत्तिरित्यर्थः ॥

तेन पिबतीत्यत्र पिबादेशे कृते लघूपधगुणो न भवति ॥

इयं च परिभाषा भाष्ये ज्ञाजनोर्ज्जा [७, ३, ७९] इत्यत्र ज्यादादीयसः [६, ४, १६०] इत्यत्र च ज्ञापिता। तथाहि पूर्वत्रोक्तम्। किमर्थं जाभावो विधीयते न जभाव एव विधीयताम्। तत्राप्यतो दीर्घो यञि [७, ३, १०१] इत्यनेन सिद्ध्यत्येव जायत इति। उत्तरत्राप्युक्तं ज्यात्परस्येयसः प्रत्ययस्याऽऽत्त्वं किमर्थमुच्यते न प्रकृतो लोप एव विधीयताम्। तस्मिन्नपि कृतेऽकृत्सार्वधातुकयोः [७, ४, २५] इत्यनेन ज्यायानिति सिद्ध्यत्येव। तस्मात्पूर्वत्र जाभाव इतरत्र त्वाकारविधानमुभयमपि ज्ञापकमस्तीयं परिभाषेति। न्यासकारः पुनराह। प्रतिपत्तिलाघवार्थं दीर्घान्तादेशविधानं ह्रस्वेऽपि हि कृतेऽतो दीर्घो यञि [७, ३, १०१] इत्येवं जानातीति सिद्ध्यति। ननु चाङ्गवृत्तपरिभाषया न प्राप्नोति। नैतत्। निष्ठितस्येत्युच्यते। न हि ज इत्यादेशे कृते निष्ठितमङ्गं भवति। अप्रयोगार्हत्वात्। ज्यादादीयसः [६, ४, १६०] इत्यस्य ज्ञापकत्वमुक्तम्। अकृत्सार्वधातुकयोः [७, ४, २५] इत्यत्र कश्चिद्ग्रहणाननुवृत्त्या। अननुवृत्तिस्तोऽरूयेत्यादौ छान्दसत्वाद्दीर्घाभावसिद्धेः ॥ ९४ ॥

**इति परिभाषावृत्तौ दैविकपादः ॥ ३ ॥**

## पूर्वत्रासिद्धीये न स्थानिवत् ॥ ८५ ॥

तेन पापक्तियायष्टिरित्यत्र पूर्वत्रासिद्धाधिकारीये कुत्वे षत्वे च कर्त्तव्येऽतो लोपस्यास्थानिवत्त्वाज्झलादौ कुत्वं षत्वं च सिद्ध्यति। ननु पापक्तियायष्टिरित्यत्र यञोऽचि च [२, ४, ७४] इति यङ्समुदायस्य लोपे कृते हलचोरादेशो न स्थानिवदिति सिद्धम्। नैतत्। अतो लोप [६, ४, ४८] इत्यकारलोपे कृते यङोऽचि च [२, ४, ७४] इति यकारमात्रमेव लुप्यते। कुत एतत्। न पदान्तादि [१, १, ४] सूत्रे यायावर इत्यत्र स्थानिवद्भावप्रतिषेधार्थाद्वरेग्रहणात्। समुदायलोपे हि स्थानिवत्त्वप्राप्त्यभावाद्वरे स्थानिवत्त्वप्रतिषेधोऽनर्थः स्यात्। यद्येवं न धातुलोप आर्द्धधातुक [१, १, ४] इत्यनर्थकम्। यङोऽकारस्य स्थानिवत्त्वेन लोलुवः पोपुव इत्यादेः सिद्धत्वात्। एवं तर्हि न धातुलोप [१, १, ४] सूत्रसामर्थ्यादचि प्रत्यये लोपः समुदायस्यैव क्रियत इति ज्ञाप्यते। अन्यत्र तु प्रत्येकं तेन सनीस्रंस इत्यादि सिद्ध्यति। तथा सनीस्रंसको दनीध्वंसक इति। यद्येवं निष्ठा शीङ् [१, २, १९] इत्यत्र यन्न्यासकृतोक्तं शीङो कित्करणस्य प्रयोजनं यङ्लुकि कित्त्वप्रतिषेधो मा भूच्छेश्यितः शेश्यितवानिति। तदसंगतम्। निष्ठायाः सत्यप्यकित्त्वे यङोऽकारस्य स्थानिवत्त्वेन गुणाप्रसङ्गात्। एवं तर्ह्यार्द्धधातुक इत्यस्य विषयसप्तमीत्वमाश्रित्य तत्र व्याख्यातम्। यदि चाचि लोपः समस्तस्यैवान्यत्र तु नियमो नास्तीति वाक्यार्थः। तेन प्रत्येकं समुदायस्यापि लोपः। अतो यदा समुदायलोपस्तदा शेश्यित इत्यत्राकित्त्वप्रतिषेधार्थं कित्करणमिति न्यासकारस्याभिप्रायः॥

इयं च परिभाषा नाग्लोपिशास्वृदिताम् [७, ४, २] इत्यत्र भाष्ये ज्ञापिता । ननु ह्युक्षमचकथदित्यादावजादेशस्य स्थानिवत्त्वादेव णौ ह्रस्वो न भविष्यति किमग्लोपिनां नेति प्रतिषेधेन तत उक्तं यत्र स्थानिवद्भावो नास्ति तदर्थमत्यररराजदिति न ह्यत्र टिलोपोऽजादेशः किं तर्हि हलचोरादेश इति ततः पुनरुक्तं न तर्ह्यग्लोपिनां नेति प्रतिषेधोऽत्र प्राप्नोति न ह्यत्राग्लुप्यते किं तर्ह्यन्योऽपि अथ योऽत्राग्लुप्यते तदाश्रयो निषेधः एवं तर्हि योऽज्लुप्यते तदाश्रयः स्थानिवद्भावोऽपि भविष्यतीत्युक्तोपसंहरणम् । एवं तर्हि यदग्लोपिनां नेति प्रतिषेधं शास्ति ततो ज्ञापयत्याचार्य इत आरभ्योत्तरत्र स्थानिवद्भावो न भवतीति तेन पूर्वत्रासिद्धीये न स्थानिवदिति वक्तव्यन्न भवतीति । अन्ये त्वाहुः । हलचोरादेशो न स्थानिवदिति । अत एव नाग्लोपिशास्वृदिताम् [७, ४, २] इत्यत्र रचितेनोक्तम् । हलचोरादेशो न स्थानिवदिति । यदि हि स्यात्तदा स्थूलादीनां यणादिलोपेऽवादेशो वक्तव्यः स्यात् । स्थवीयानिति । अन्ये च बहवो दोषा उक्ताः । तस्माद्धलचोरादेशो न स्थानिवदिति । इह पुनरग्लोपिग्रहणसामर्थ्यात् समुदायलोपेऽप्यग्लोपीत्याश्रीयते । केवलाग्लोपे प्रतिषेधस्यानर्थक्यादिति भाष्यटीकायां निरूपितम् । ननु स्थवीयानित्यादाववादेशो वक्तव्यः स्यादिति कथमुच्यते । यावताकारस्य स्थानिवत्त्वादवादेशः स्यादेव । उच्यते । हलचोरादेशो न स्थानिवदित्यस्मिन्सति समुदायस्य स्थानिवत्त्वादवादेशो न स्यात् । नैतत् । अचः स्थानिवत्त्वमुच्यते न समुदायस्य । उच्यते । यथात्र यो ह्युभयोः स्थाने सम्पद्यत इति व-

चनादेशस्त्वादेशस्याप्यजादेशव्यपदेशस्तथानजादेशव्यपदेशोऽप्यस्ति । तदेवं यदानज्व्यपदेशस्तदावादेशो वक्तव्यः स्यादित्युक्तम् । यदेतदुक्तमिचाग्लोपिग्रहणसामर्थ्यात्समुदायलोपेऽप्यग्लोपीत्याश्रीयते । केवलाग्लोपे प्रतिषेधस्यानर्थकत्वादिति । एतच्चाग्लोपे सामान्यज्ञापकं तेन दृषद्माख्यददृषदित्यत्रागनग्लोपेऽप्यनग्लोप इति प्रतिषेधाद्दीर्घो लघोः [७, ४, ९४] इति न भवति । अन्यथागनग्लोपेऽग्लोपव्यपदेशो न स्यात्, अचकथदित्यत्र केवलाग्लोपेऽग्लोपप्रतिषेधस्य चरितार्थत्वात्, न चेदं स्थानिवद्भावेन सिध्यति दीर्घविधौ तन्निषेधात् ॥

अनित्या चेयम् । न पदान्तादि [१, १, ५८] सूत्रे द्विर्वचनग्रहणात् । तेन वेतस्वानित्यत्राकारलोपस्य स्थानिवत्त्वादसकारान्तपदं भवतीति रुत्वाभावः । तथा कुटादीत्यत्राकारस्य स्थानिवत्त्वाट्टकारस्यापदान्तत्वेन जश्त्वाभावः । नन्वेकादेशस्य पूर्वग्रहणेन टकारस्य पदान्तत्वं नास्ति । उच्यते । परग्रहणं युक्तम् । यथा शक्येन विधिः कर्तुमिति न्यायात् । सत्यम् । यत्र पराश्रितो विधिर्यथा वृक्षादित्यत्र सुपः परग्रहणात् सुप्त्वात्पदत्वं कुटादीत्यत्र न परग्रहणाश्रितं जश्त्वम् । न हि जश्त्वमाकारमपेक्षते । उच्यते । यद्यपि जश्त्वस्याकारो निमित्तं न भवति तथापि परग्रहणे सति कुडिति टकारान्तं पदं भवतीति जश्त्वस्य परग्रहणमेव निमित्तम् । ननु सत्यपि परग्रहणे जश्त्वं नास्ति टकारस्यापदान्तत्वात् । अकारान्तं हि पदं ततः सुब्विधिः । उच्यते । परग्रहणे कृते एकदेशविकारद्वारेण टकारान्तं पदम् । नैतत् । अन्तादिवत्त्व एकदेशविकाराभावात्, अन्यथा हि

वृक्षमित्यत्राप्येकादेशस्य पूर्वग्रहणे मकारस्यैकदेशविकारद्वारेण सुप्त्वे सुपि च [७, ३, १०२] इति दीर्घः स्यादेव। एवं चोभयत आश्रये नान्तादिवदिति व्यर्थं स्यात्। उच्यते। यत्र विधिरुभयमाश्रयति एकमन्तादिवत्त्वेनापरमेकदेशविकारद्वारेण तत्रैकदेशविकारस्यौकारो यथा वृक्षमिति। कुटादीत्यत्र न जश्त्वं परमाकारमाश्रयतीति युक्तमेकदेशविकारिणष्टकारस्य पदान्तत्वमिति। ननु तथाप्यत्र पदान्तविधौ जश्त्वे कर्त्तव्ये पदान्तविधिं प्रति न स्थानिवदिति स्थानिवत्त्वप्रतिषेधाज्जश्त्वेन भवितव्यमेव। उच्यते। सति स्थानिवत्त्वनिषेधे पदान्तत्वं सति च पदान्तत्वे स्थानिवत्त्वनिषेध इतीतरेतराश्रयत्वम्। एवमपि झलां जशोऽन्ते [८, २, ३९] इति जश्त्वमस्त्येव न चास्ति स्थानिवत्त्वं जश्त्वविधिं प्रति न स्थानिवदिति तन्निषेधात्। उच्यते। रेफापादीये चरस्वचरिते झलां जश्त्वे कर्त्तव्ये स्थानिवत्त्वप्रतिषेध इष्यते। तथा च धत्त्व सग्धिरित्युदाहरणम्। एतच्च ठाजादावूर्ध्वं द्वितीयादच [५, ३, ८३] इत्यत्र षडिकप्रस्तावे रक्षितेनोक्तम्॥ ९५॥

उपजातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते। परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशते॥ ९७॥

तेन दधतीत्यत्रोपजातनिमित्तोऽप्यन्तरङ्गो झोऽन्त [७, १, ८३] इत्यन्तादेश उपजनिष्यमाणनिमित्तेनादभ्यस्तात् [७, १, ४] इत्यदादेशेन बाध्यते॥

ज्ञापकं चात्र श्रीङः सार्वधातुके गुण [७, ४, २१] इत्यत्रैका-

रे विधानार्थे गुणग्रहणम्। तस्यैतत्प्रयोजनं गुणश्रुत्येकपरिभाषो-
पस्थानादिक एव स्थाने गुणो यथा स्यादिति। अन्यथा शेते
इत्यत्र ङकारस्येत्संज्ञां बाधित्वैकारः स्यात् तत्र यद्यन्तरङ्गत्व-
दा गुणग्रहणमनर्थकं ङकारे लुप्तेऽन्यथैवेकारस्यैकारादेशप्र-
सङ्गात्। अत एव शीङः सार्वधातुके गुण इत्यपनीय सार्वधातु-
कमपिच्छीङ इति न कृतम्। न चैवमधिशय्येते इत्यत्र ङित्त्व-
प्रतिषेधादातो ङित [७, २, ८१] इतीयादेशो न स्यादिति वाच्य-
म्। यतोऽशीङ इतिपञ्चमीनिर्देशाच्छीङ उत्तरस्य प्रतिषेधेन भ-
वितव्यम्। न चाशीङ इति पर्युदासाश्च सादृश्येनाजन्तत्वाच्चाचो
ङित्त्वेन भवितव्यम्। पर्युदासस्याग्रहणात्। अथ वा न शीङ इति
पृथगेव क्रियतामिति। तस्मात्परिभाषाद्वयस्य ज्ञापकमिति। उ-
पजातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बा-
ध्यत इत्यत्रार्थे ऋच्छत्यृतामित्यत्र ऋकारप्रश्लेषो रक्षितेन ज्ञा-
पक उक्तः। यद्येषा न स्यात् ऋ अनुमिति स्थिते इको रे यणा-
देशे कृते स्थानिवद्भावाद् द्विर्वचने कृतेऽत आदेः [७, ४, ७०]
इति दीर्घत्वेन सिद्धमारतुरारुरिति। अस्यां तु सत्यां यणादेशो
नास्ति। द्विर्वचने कृते उपजनिष्यमाणनिमित्तेन सवर्णदीर्घत्वेन
बाधितत्वात्। सवर्णदीर्घत्वे च कृते प्रकृतिग्रहणेन ग्रहणाद्रतु-
रिति स्यात्। अभ्यासग्रहणपक्षे रेफलोपे आतो लोप इटि च
[६, ४, ६४] इत्याकारलोपे चातुरिति स्यात्। ऋगतावित्यस्य तु
ग्रहणे गुणेनारतुरारुरिति सिध्यति। एतच्च वार्णादाङ्गं बलीय
इत्यस्याव्याश्रयत्वपक्षाश्रयणादुच्यते। यदि तु व्याश्रये वार्णादा-
ङ्गं बलीय इति स्यात् तदा सवर्णदीर्घत्वम्बाधित्वोरदत्त्वादिकं

स्यात् । अत एवोश्च [१, २, १२] इत्यत्र रक्षितेनोक्तम् । अथ वा श्रयग्रहणं तत्र प्रत्याख्यातं यत इति ॥ ९७ ॥

## णौ कृतं स्थानिवत् ॥ ९८ ॥

णौ परतो यद् वृद्ध्यादिकं कृतं तद् द्विर्वचने कर्त्तव्ये स्थानिवत्स्यात् । तेन जुहावयिषति जुहावयिषतीत्यत्राभ्यासस्योवर्णान्तत्वं सिद्धं भवति । अमूमवदित्यत्र तु वकारस्य संप्रसारणं णौ कृतमपि द्विर्वचने न स्थानिवद्भवति । अजादेशस्यैव णौ कृतस्य द्विर्वचने स्थानिवदित्यभ्युपगमात् । एतच्च द्विर्वचनेऽचि [१, १, ५९] इत्यत्र भाष्य उक्तम् ॥

ज्ञापकं चात्र ओः पुयण्ज्यपरे [७, ४, ८०] इत्यत्राभ्यासविशेषणमोरिति पदम् । तेन हि पवर्गे यणि जकारे चाऽवर्णपरेऽभ्यासस्येत्वं विधीयते बिभावयिषतीत्यादिषु, यदि च णौ कृतं वृद्ध्यावादेशादिकार्यं स्थानिवन्न स्यात्कथमभ्यासस्योकारेत्वं विधीयते । तुल्यजातीयत्वाज्ज्ञापकस्यापराणां पुयण्जां सदृशा अन्येऽवर्णपरा एव स्थानिवत्त्वं भजन्ते । तेनाचिकीर्त्तदित्यत्र न स्थानिवदित्युक्तम् [७, ४, ७] इत्यत्र रक्षितः । एतत्तु न सम्यक् । स्तौतिण्योरेव षण्यभ्यासात् [८, ३, ६१] इत्यत्र सिषेधयिषतीत्युदाहरण एकारपरेऽनया स्थानिवत्त्वं कृत्वा द्विर्वचनस्य प्रतिपादितत्वात् । तथैाजढदित्यत्रानया स्थानिवत्त्वेन द्विर्वचनमुक्तमयुक्तं स्यात् । तथा लोपः पिबतेरीच्चाभ्यासस्य [७, ४, ४] इत्यत्रापीप्यदित्यत्र णौ कृतं स्थानिवद्भवतीति वृत्तिकृद्वचनं व्याहतं स्यात् । तस्मात्सामान्येन परिभाषा । ज्ञापकसिद्धं न सर्वत्रेत्यचिकीर्त्तदित्यत्र व्यवस्था । अवश्यं चैतत् । अन्यथाऽधिजिगापयिषती-

त्यत्र का गतिः । अन्यत्वात् । अङ्गैकदेशाजादेशो णौ कृतं स्थानिवदिति । तेनाधिजिगापयिषतीत्यत्र स्थानिवत्त्वं न । तत्र णौ च संश्चङोः [६, १, ३१] इत्यत्र रक्षितेन व्याख्यानम् । एवमप्यचिकीर्त्तदित्यत्र दोष एव ॥ ९८ ॥

अभ्यासविकारेष्वपवादा नोत्सर्गान्विधीन्बाधन्ते ॥ ९९ ॥

अभ्यासविकारेष्वपवादत्वान्तरङ्गत्वपरत्वादिभिर्बाधका बाध्यान् विधीन्न बाधन्ते ॥

तेन मीमांसत इत्यत्र मान्बधादिना दीर्घेण सन्यतः [७, ४, ७९] इतीत्त्वं न बाध्यते । तथाऽचिक्षणदित्यत्र सावकाशं सन्यत [७, ४, ७९] इतीत्त्वमचीकरदित्यादौ दीर्घो लघोः [७, ४, ७९] इत्यनेन न बाध्यते ॥

ज्ञापकं चात्र दीर्घोऽकित [७, ४, ८३] इत्यत्राकिद्ग्रहणम् । तद्धि यंयम्यत इत्यादौ दीर्घो मा भूदित्येवमर्थं क्रियते । यदि चाभ्यासविकारेष्वपि बाध्यबाधकभावः स्यात्तदा नुगागमे कृतेऽनजन्तत्वादेव दीर्घो न भविष्यति किमकिद्ग्रहणेन तत् कृतमुक्तार्थस्य ज्ञापकमिति ॥ ९९ ॥

इति परिभाषावृत्तौ चौपादः ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

---

पूर्वत्रासिद्धीयमद्विर्वचने ॥ १०० ॥

द्विर्वचने कर्त्तव्ये पूर्वत्रासिद्धम् [८, २, १] इति न प्रवर्त्तते । तेन द्रोग्धादोग्धा द्रोढाद्रोढेत्यत्र द्रुहेर्म्मुहि घत्वढत्वयोः कृतयोः स-

र्वस्य द्वे [८, १, १] इति द्विर्वचनं भवति । अन्यथा पूर्वत्रासिद्धम् [८, २, १] इत्यसिद्धत्वाद् द्रोह् तेत्यस्य द्विर्वचनं स्यात् । ततो वा द्रुह्मुह्वेति घत्वविकल्पः । तत्रैतन्न लभ्यते यदा प्रकृतेर्घत्वं तदा द्विरुक्तस्यापीति । ततश्च ढत्वमपि कदा चित्स्यात् । एवं च द्रोग्धाद्रोढेत्यनिष्टं स्यात् । नन्वसिद्धपादं पठित्वा सर्वस्य द्वेपादः पठ्यतां ततोऽसिद्धत्वं न भविष्यति । नैतत् । एवं हि पठतिपठतितरामित्यत्र प्रकर्षप्रत्ययात्परत्वेन द्विर्वचनं न स्यात् । पूर्वत्रासिद्धीये नास्ति परत्वमभावादुत्तरस्येतिवचनाद्ग्रामस्त्वेद्यत इत्यत्र च त्वामौ द्वितीयाया [८, १, २३] इत्यस्यासिद्धत्वादादेशो न स्यात् ॥

ज्ञापकं चात्र सर्वस्य द्वे [८, १, १] इत्यत्र सर्वस्येति वचनम् । तद्धि मत्वर्थीयाकारप्रत्ययान्तम् । तेनायमर्थः । सर्वकार्ययुक्तस्य द्विर्वचनं सर्वकार्यं कृत्वा द्विर्वचनं भवतीत्यर्थः । एवं च तदुपपद्यते यद्यसिद्धत्वन्न भवतीति ज्ञापकम् । ननु सर्वस्येति वचनं सर्वस्य द्विर्वचनार्थम् । अन्यथा परेर्वर्जने [८, १, ५] इति द्विर्वचनमन्त्यस्य स्यात् । एतच्चायुक्तम् । द्वे विधीयेते तयोश्चानेकाल्त्वात्सर्वादेशः सिद्ध एव । सत्यम् । द्वन्द्वन्तेषु पर्यादिष्विकारस्यान्त्योन्त्यस्य स्यात् । ननु द्वाविकारौ स्याताम् । ततश्चानेकाल्त्वाद्युक्तं सर्वादेशत्वम् । न च द्वाविकारौ कृतैकादेशावादेशत्वं प्रतिपद्येते इत्येकाल्त्वाददेशोऽन्त्यस्य स्यात् । न ह्यप्रवृत्तयोस्तयोरेकादेशशास्त्रप्रवृत्तिरस्ति प्रवृत्तिकाले चानेकाल्त्वात्सर्वादेशत्वमिति नास्त्यन्त्यस्य विधिः । स्यादेतत् । अचोऽर्द्धमात्रे तर्हि प्राप्नुतः परिशब्दस्यार्द्धमात्रे द्वे विधीयमानेऽल्ग्रहणेन चार्द्धमात्राया अग्रहणादनेकाल्त्वाभावेऽसति सर्वस्येति वचनेऽन्त्यस्य

प्राप्नुत इति । एतच्चातीवासम्यक् । अस्मिन्नष्टस्याईमाचादयस्यो-
च्चारणायोग्यत्वादशक्य आदेशः कर्त्तुम् । अन्यस्वाह । सर्वस्य
द्वे [८, १, १] इत्यत्र सूत्रे कात्यायनवाक्यमिदं परिभाषारूपेण
पठ्यते । पूर्वत्रासिद्धीयमद्विर्वचन इति । अनित्या चेयम् । उभौ
साभ्यासस्य [८, ४, २१] इति वचनात् । तेन प्राणिणायेति सि-
ध्यति ॥ १०० ॥

इति परिभाषावृत्तौ सर्वस्य द्वेपादः ॥ १ ॥

अनित्यमागमशासनम् ॥ १०१ ॥

तेन शाकं पचानस्येत्याने मुग्न भवति । सागरं तर्त्तुमिच्छती-
त्यत्रेड् न भवति ॥

ज्ञापकं चात्रानि लोट् [८, ४, १८] इत्यत्रानीत्यागमसहित-
स्य नेर्ग्रहणं नित्ये ह्यागमशासन आट उपादानमकृत्वा निर्लोट्
इत्येवं कुर्यात् । तथा युवोरनाकौ [७, १, १] इत्यत्र न्यासे घो-
र्लोपो लेटि वा [७, ३, ७०] इति वाग्रहणेन ज्ञापिता । के चित्तु
स्तोः श्चुना श्चुः [८, ४, ४] इत्यकृतनुमागमनिर्देशं ज्ञापकमाहुः ।
नन्वागमशासनमिति कथम् । यावताऽमि पूर्व [६, १, १०७] इ-
त्येकादेशस्य परग्रहणेन ग्रहणादन्तर्वर्त्तिनीं विभक्तिमाश्रित्य
पदत्वान्नलोपेन भवितव्यम् । उच्यते । अचः परस्मिन् [१, १,
५७] इति स्थानिवत्त्वान्न भविष्यति । न चात्र पदान्तविधिं प्रति न
स्थानिवदित्यस्ति, इतरेतराश्रयत्वात् । सति स्थानिवत्त्वप्रतिषेधे
पदान्तत्वं सति च पदान्तत्वे स्थानिवत्त्वप्रतिषेध इति । नन्वेव-
मपि पूर्वत्रासिद्धीये न स्थानिवदिति स्थानिवत्त्वं न प्राप्नोति ।
उच्यते । उत्तरपदत्वे चापदादिविधावित्युत्तरस्य पदत्वे कार्त्त-

व्ये प्रत्ययलक्षणप्रतिषेधाच्छासनस्य पदत्वं नास्तीति कुतो नलोपः। यद्येवं षात्पदान्तात् [८, ४, ३५] इत्यत्र वृत्तौ यद्व्याख्यातं पदेऽन्तः पदान्त इति सप्तमीसमासोऽयं तेनेह न भवति सुसर्पिष्केण सुयजुष्केणेति तदसङ्गतम्। तथाहि। यथा सुसर्पिष्केणेत्यत्र कप्रत्ययेऽपदे परतः षकारान्तत्वं तथैवापदान्तत्वं षान्तस्य। उच्यते। पदादिविधिशब्देन सात्पदाद्योः [८, ३, १११] इत्यारभ्य ये विधयस्ते गृह्यन्ते। तेनापदादिविधाविति वचनादुत्तरस्य पदत्वं भवत्येव। अत्र चार्थे षात्पदान्तादित्यत्र पदान्तग्रहणं ज्ञापकम्। तथा च पदव्यवायेऽपि [८, ४, ३८] इत्यत्र मैत्रेयः। अत्र च ज्ञापकम्। षात्पदान्तादित्यत्र पदेऽन्तः पदान्त इत्येवमर्थस्य पदान्तग्रहणस्योपादानम्। न हि तदन्यथा सम्भवतीति। अत्रोच्यते। ननु यद्येवमर्थं पदान्तग्रहणं तदा तदकृत्वा षात्सुपीत्येवं क्रियताम्। षात्पद इति वा। अयं चार्थः सुबन्ते परतो यः षकारः पदे परत इति एतदेवमुक्तार्थस्य ज्ञापकं भविष्यति। किं चैवंविधज्ञापने न प्रयोजनम्। षात्पदान्तादिति कर्त्तव्ये प्रत्ययलक्षणं भवतीत्येवास्तु। उच्यते। यत्तावदुक्तं। सुपीति क्रियतां पद इति वा। तन्न। यदि तन्निर्वहति। तदा किं पदान्तग्रहणस्योक्तार्थज्ञापकता व्याहन्यते। द्वितीयमपि न। यत एवंविधज्ञापने द्रुणसो वार्ध्रीणस इत्यादावुत्तरस्य नःशब्दस्य पदान्तत्वात्पूर्वपदात्संज्ञायामग [८, ४, ३] इति णत्वं भवति चर्मनासिके णत्वाभावः। अन्यथा मातृभोगीणवच्चर्मनासिक इत्यत्रापि णत्वं स्यात्। तथा माषकुम्भवापेनेति समास उत्तरस्य कुम्भशब्दस्य पदत्वं भवति। तेन माषकुम्भवापेनेत्यत्र पदव्यवाये ण-

त्वप्रतिषेधः सिद्ध्यति। अन्यथा प्रत्ययलक्षणाभावान्निमित्तनि-
मित्तिनोः पदव्यवायो न स्यात्। नन्वत्रापि पदव्यवायेऽपि [८, ४, ३८] इतिसामर्थ्यात्प्रत्ययलक्षणेन पदत्वं भविष्यति। उच्यते। यदि सामर्थ्याद्व्यवस्था तदोक्तप्रकारे निष्फलो व्यारोषः।
ननु यदि सात्पदाद्योः [८, ३, १११] इत्यारभ्य कार्येऽपदादि-
विधाविति वचनादुत्तरस्य पदत्वं भवति। तर्हि भावकर्मणोः
[१, ३, १३] इत्यादौ पदान्तस्य [८, ४, ३७] इति कर्त्तव्ये णत्वप्रतिषेधे पदत्वं प्राप्नोति ततश्च पदान्तस्य [८, ४, ३७] इति णत्वप्रतिषेधेन भवितव्यम्। उच्यते। भावकर्मणोः [१, ३, १३] इति निर्देशाददोषः। ननु च यद्युत्तरपदत्वे चापदादिविधावि-
त्यस्ति। कथं तर्हि विमलद्यु दिनमिति। यावताऽत्राप्युत्तरपदत्वे
चापदादिविधाविति वचनाद्दिवशब्दस्य पदत्वं नास्ति। उच्यते।
तत्रैङः पदान्तादति [६, १, १०९] इत्यतोऽन्तग्रहणमनुवर्त्तते।
तेन तदन्तविधिना दिवशब्दान्तपदस्योत्त्वमिति सिद्धं विमलद्यु
दिनमिति। केवले तु द्युभ्यामित्यादौ व्यपदेशिवद्भावादुत्त्वम्।
न चास्ति व्यपदेशिवद्भावोऽप्रातिपदिकेनेति। द्युप्रागपागुदक्-
प्रतीचो यत् [४, २, १०१] इत्यत्र निर्देशात्॥ १०१॥

**निमित्तापाये नैमित्तिकस्याप्यपायः॥ १०२॥**

निमित्तेन निर्मितं नैमित्तिकम्। वुञ्छणादौ [४, २, ८०]
कुमुदादित्वाट्ठक्। कारणापाये तत्कार्यमप्यपैति॥

तेन स्नातीत्यत्र मूर्द्धन्याभावे णत्वमपैति। पटुभार्य इत्यत्र
ङीविनवृत्तौ यणादेशो निवर्त्तते॥

ज्ञापकं चास्या उदः स्थास्तम्भोः पूर्वस्य [८, ४, ६१] इत्यादौ

षकारनिवृत्तौ ठस्य थकारोच्चारणम् । लौकिकस्यैव सव्यभिचारो न्यायः । लोके हि जपाकुसुमसन्निधौ स्फटिके रागस्तन्निवृत्तौ निवर्त्तते, तक्षकाभावे च प्रासादोऽस्त्येव । तेनास्यापत्यमिति प्रकृतेरपाये प्रत्ययो न निवर्त्तते । तथा अभूत्नृप इत्यादौ पदसंस्कारे भूतसामान्ये लुङनद्यतनावगमवेलायां न निवर्त्तते । एतस्मिन् पादे उपसर्गादसमासेऽपि णोपदेशस्य [८,४,१४] इत्यत्र स्थाने द्विर्वचनपक्षेऽपि श्रुत्यभेदात्तत्त्वाध्यवसायेन कार्याणि प्रवर्त्तन्त इति सोपदेशानां सिच्प्रभृतीनां पाठेन सिचो यङि [८,३,११२] इतिप्रतिषेधार्थेनेत्यादिफक्किकायां दूषणं समाधानं चैकाच्पादे संप्रसारणभाषायामुक्तम् ॥ १०२ ॥

इति परिभाषावृत्तौ रेफपादः ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

---

## अतः परं न्यायमूलाः परिभाषाः ॥

---

### गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ १०३ ॥

प्रयत्नोपपादितोऽर्थो गौणः शब्दः, श्रुतिमात्रेण प्रतीयमानस्तु मुख्यः, एतयोर्मध्ये मुख्य एव कार्यं भवति । तद्यथाऽग्नेर्ढक् [४,२,३३] इति मुख्यादग्निशब्दाड्ढग्भवति । न त्वग्निर्माणवक इत्यादेरुपचरिताद्गौणात् । तथा विभाषाऽञ्चेरदिक् स्त्रियाम् [५,४,८] इति प्राच्यवाची दिगित्यत्र खप्रत्ययो मुख्ये दिगर्थेऽदिक् स्त्रियामिति प्रतिषिध्यते । न तु दिगर्थोपसर्जनीभूते ब्राह्मण्यर्थे प्राचीना ब्राह्मणीति ॥

न्यायमूला चेयम् । तथा ह्यग्नेः स्तुत्स्तोमसोमा [८, ३, ८२] इत्यत्र भाष्यकारेणोक्तम् । लौकिक एवायं न्यायो गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति । यथा गौरनुबध्यतामित्युक्ते वाहीको नानुबध्यते । तेनाग्निसोमौ माणवकावित्यत्रोपचरितवृत्तेरग्निशब्दादुत्तरस्य सोमसकारस्याग्नेः स्तुत्स्तोमसोमा [८, ३, ८२] इति षत्वं न भवति मुख्यार्थात्तु ईदग्नेः सोमवरुणयोः [६, ३, २७] इतीत्त्वे कृते भवत्येव षत्वमग्नीषोमाविति । अत एवेदग्नेः सोमवरुणयोः [६, ३, २७] इत्यत्र वृत्तावग्नेः स्तुत्स्तोमसोमा [८, ३, ८२] इत्यनेन षत्वमुक्तम् । न चैकदेशविकारद्वारेण गौणोऽर्थो भवति । तथाहि । यथा गौरनुबध्यतामित्युक्ते वाहीको नानुबध्यते । न तथा कर्णादिहीनो गौरिति । न्यासकारेण त्वग्नेः स्तुत्स्तोमसोमा [८, ३, ८२] इत्यत्र विभाषेट [८, ३, ७९] इत्यतोऽनुवृत्तविभाषाग्रहणस्य व्यवस्थितविभाषया दीर्घादेवाग्नीशब्दात्षत्वमुक्तम् । अग्निसोमौ माणवकावित्यत्र षत्वन्न भवतीत्युक्तम् । पुरुषोत्तमदेवेन तु व्याख्यातम् । ज्ञापकमप्यत्र वर्णयन्ति द्यावापृथिव्यादि [४, २, ३२] सूत्रे अग्नीषोम इति षत्वार्थं निपातनम् । षत्वं ह्यत्राग्नेः स्तुत्स्तोमसोमा [८, ३, ८२] इति प्रत्येकारान्तान्मुख्यादग्निशब्दात्परस्य सोमसकारस्योच्यमानमीदग्नेः सोमवरुणयोः [६, ३, २७] इतीत्त्वे कृत एकदेशविकारेण स एवायमिति संप्रत्ययेऽपि गौणत्वान्न प्राप्नोतीत्यग्नीषोमा इति षत्वार्थं निपातनं ज्ञापकम् । न चाग्नेः स्तुत्स्तोमसोमा [८, ३, ८२] इति वचनात्षत्वमाशङ्कनीयम् । अग्नीषोमास्यौ कौ पित्यत्र देवताद्वन्द्वे वचनस्य चरितार्थत्वादिति । तद्व्यवशात्क चिङ्गौणो-

ऽप्यर्थः स्वीक्रियत एव। यथा शीतोष्णाभ्यां कारिणि [५, २, ७२] इति कन्विधौ शीतकोऽलस उष्णको दक्ष इति। गोतो णित् [७, १, ९०] औतोऽम्शसोः [६, १, ९३] इत्यत्र गोशब्दप्रधानत्वान्निर्देशस्यार्थाश्रययोर्गौणमुख्ययोर्न्न विचार इति गौर्वाहीको गां वाहीकमानयेति वृद्धात्वे भवतः ॥ १०३ ॥

कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः ॥ १०४ ॥

कृत्रिमं पारिभाषिकम्। ततोऽन्यदकृत्रिमम्। तयोर्मध्ये कृत्रिमे कार्यसंविज्ञानम् ॥

यथा कर्मणि द्वितीया [२, ३, २] इति कर्त्तुरीप्सिततमं कर्म गृह्यते। न लौकिकं क्रिया कर्मेति। तथा कण्वादिभ्यो गोत्रे [४, २, १११] इञश्च [४, २, ११२] इति पारिभाषिकगोत्रेञन्तादण् भवति दाक्षेरमी दाक्षाश्छात्राः। न लौकिकगोत्राद्युवप्रत्ययान्तात्पाणिनिशब्दात्। तेनौत्सर्गिको वृद्धाच्छ एवं भवति पाणिनीया इति। पाणिनिशब्दो हि पाणिनस्यापत्यमिति युवापत्येऽन्तः। वृद्धस्य च पूजायामिति वा गोत्रप्रत्ययस्यैव युवसंज्ञायां युवप्रत्ययेऽन्तः। तदेवं यूनि लुक् [४, १, ९०] इति इञो लुकं कृत्वा पाणिनशब्दाच्छप्रत्यये कृते पाणिनीय इति। अन्यः पुनराह गोत्रोक्षोष्ट्रोरभ्रराजराजन्य [४, २, ३९] इत्यत्रापत्यप्रत्ययान्ताद्राजन्यशब्दात्प्रत्ययविधानात्प्रत्ययाधिकारे न लौकिकं गोत्रं गृह्यत इति। तद्यनन्तरापत्यार्थो गोत्रोक्षोष्ट्रोरभ्राज [४, २, ३९] इत्यत्र क्रियते। यदि चात्र लौकिकं गोत्रमपत्यमात्रं गृह्यते तदाऽनन्तरापत्यार्थमपि राजन्यग्रहणमनर्थकम्। अपत्यमात्रस्य गोत्रग्रहणे गोत्रश्रुत्यैवोपात्तत्वात्तस्मा-

द्राजन्यग्रहणं ज्ञापयति प्रत्ययाधिकारे लौकिकं गोत्रं न गृह्यत इति । तेन प्रत्ययाधिकारे अणिञोरनार्षयोरित्यत्र तथा कण्वादिभ्यो गोत्रे [४, २, १११] इञश्च [४, २, ११२] इत्यादावपि शास्त्रीयमेव गोत्रं गृह्यते । तन्मतेनैव यस्कादिभ्यो गोत्र [२, ४, ६३] इत्यत्र वृत्तावुक्तम् । प्रत्ययविधेश्चान्यत्र लौकिकस्य गोत्रस्य ग्रहणमिति । एतच्च वार्त्तिककारमतम् । स हि राजन्यशब्दस्य जातावपि वर्त्तमानस्यापत्यार्थत्वमभ्युपेत्य प्रकृत्याऽके राजन्यमनुष्ययुवान इत्यापत्यस्य च तद्धितेऽनाति [६, ४, १५१] इति यलोपनिवृत्तये प्रकृतिभावमारभते । अपर आह । उभयगतिरिह शास्त्रे सम्भवतीति क चिच्छास्त्रीयग्रहणम् । तेनाणिञोरनार्षयोः [४, १, ७८] इत्यत्र तथा कण्वादिभ्यो गोत्र [४, २, १११] इञश्च [४, २, ११२] इत्यत्र कृत्रिमपरिभाषया शास्त्रीयगोत्रग्रहणम् । यस्कादिभ्यो गोत्रे [२, ४, ६३] इत्यत्र गोत्रोक्षोष्ट्रोरभ्र [४, २, ३९] इत्यत्र प्रत्ययविधावपि लौकिकगोत्रग्रहणं राजन्यग्रहणं त्वपत्यप्रत्ययान्तकार्यान्तरनिवृत्त्यर्थं तेन राजन्यकमित्यत्रापत्यस्य च तद्धितेऽनाति [६, ४, १५१] इति लोपो न भवति । एवं च प्रकृत्याऽके राजन्यमनुष्ययुवान इत्येतदक्तव्यं न वक्तव्यं भवति । एतच्च सूत्रदर्शने गोत्रोक्षोष्ट्र [४, २, ३९] इत्यत्र वृत्तावुक्तम् । अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इति । अपत्याधिकारे तु तस्यापत्यमित्यधिकाराद्गोत्रे कुञ्जादिभ्यश्च्फञ् [४, १, ९८] इत्यादौ गोत्रग्रहणाच्छास्त्रीयमेव गोत्रं गृह्यते । अपत्यमात्रस्य लौकिकस्य गोत्रस्यापत्याधिकारादेव लब्धत्वात् ॥ १०४ ॥

**प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ १०५ ॥**

तेनाकडारादेका संज्ञा [१, ४, १] इत्यत्र कडाराः कर्मधारय इत्यत्र यः कडारशब्दः सोऽवधित्वेन गृह्यते न तु प्राक्कडारात्समास इत्यत्र। कडाराः कर्मधारय [२, २, ३८] इत्यत्र यः कडारशब्दस्तस्यानुवादत्वात् प्राधान्यम्॥

लौकिक एवायं न्यायः प्रधानाप्रधानयोरित्यादिः। तथाहि। बहुषु गच्छत्सु कश्चित् कं चित् पृच्छति कोऽयं याति स आह राजेति। यः पृच्छति यश्चाचष्टे तयोरुभयोरपि प्रधाने राजनि संप्रत्ययो न तु समीपपुरुषादाविति। अयं च प्रधानाप्रधानन्यायः क चिदन्तरङ्गन्यायं बाधते क चिन्नेति। तथाहि। लोको हि प्रातरुत्थाय मुखधावनादीन्यन्तरङ्गाणि तावदादौ करोति पश्चात्प्रधानं राजगृहगमनादिकमिति। तदेवमुभाभ्यां प्रधानान्तरङ्गाभ्यामिह व्यवहारः। तथाहि। प्रधानाप्रधानन्यायेन स्थानिवत् [१, १, ५६] सूत्रे कार्यातिदेश उक्तः शास्त्रापेक्षं कार्यं प्रधानं शास्त्रस्य तदर्थत्वात्। तथा गाङ्कुटादि [१, २, १] सूत्रेऽन्तरङ्गत्वाच्छास्त्रातिदेशः। तथाचोचुकुटिषतीत्यत्रानौपदेशिकत्वात्मनो ङित्त्वादात्मनेपदाभावो न्यासे व्याख्यात उपपन्नो भवति। कार्यातिदेशे हि यथाध्यगीष्टेत्यत्रात्मनेपदं स्थानिवद्भावेनोक्तम्। तथा चोचुकुटिषतीत्यत्रापि स्यात्। कार्यापेक्षया शास्त्रस्यान्तरङ्गत्वं प्रथमतो ग्रहणात्॥ १०५॥

**उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०६ ॥**

तेन नमस्यति देवानिति कर्मणि द्वितीया भवति। न तु नमःस्वस्ति [२, ३, १६] इत्युपपदविभक्तिश्चतुर्थीति॥

अत्राहुः । ननु प्रत्ययार्थे गुणीभूतस्य नमःशब्दस्य पृथक्सम्बन्धाभावादेव देवशब्दाच्चतुर्थ्याः प्रसङ्गो नास्ति । तथा नमस्करोति देवानित्यत्रापि नमःशब्दो यदा करोतिपरः करोतेः प्रणाममर्थं द्योतयन् साक्षात्प्रभृतीनि च [१, ४, ७४] इत्यनेन क्रियायोगे गतिसंज्ञको भवति तदा करोत्यर्थे तस्य प्रादिवत् सर्वशब्दावृत्तेः पृथग्देवशब्देन सम्बन्धानुपपत्तेश्चतुर्थीप्रसङ्गो नास्ति। यथाऽपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु [१, ४, ९६] इत्यत्र सर्पिषोऽपि स्यादित्यत्र सर्पिःशब्दात्कर्मप्रवचनीयविभक्त्यभावो न्यासे व्याख्यातः । तत्किमेतदर्थपरिभाषाश्रयणम् । युक्तं चैतत् । अन्यथा क्रियायोगाभावपक्षेऽपि यदा विशेषभूतं प्रणामार्थमात्र तदाप्यनया परिभाषया चतुर्थीं बाधित्वा द्वितीया स्यात्। न चेष्यते। तथा च भट्टिः। नमश्चकार देवेभ्यः पर्णशालां मुमोच चेति । तथा रावणाय नमः कुर्यात्स्मीतेऽस्तु स्वस्ति ते ध्रुवमिति । अन्ये त्वाहुः। गुणभूतापि क्रिया या साधनमनु सम्बन्धमनुभवति यथा कृतपूर्वी कटं देवदत्त इति तद्वदिह नमोऽर्थः प्रणामो देवैः सम्बध्यत इति नमस्यति देवानित्यत्र स्यादेव चतुर्थीत्युपपदविभक्तिरिति परिभाषा समाश्रयितव्या। किं त्वेवं देवाय नमः करोतीत्यत्र स्याद् द्वितीया । तस्मादिदमुदाहरणम् । कुतोऽध्यागच्छति कुतः पर्यागच्छतीत्यत्राधिपरी अनर्थकौ [१, ४, ९३] इत्यधिपर्योः कर्मप्रवचनीयत्वेऽपि कुत इति किंशब्दादपादाने पञ्चमी । न कर्मप्रवचनीययुक्ते द्वितीया । कर्मप्रवचनीयसंज्ञा गतिसंज्ञाबाधनार्था तेन गतिर्गतौ [८, १, ७०] इति निघातो न भवति । अत्र हि किंशब्दा-

प्यस्याधिपर्यर्थेनोपरिभावेन सर्वतोभावेन च सम्बन्धोऽस्ति । तथा सुसिक्तं भवतेत्यत्र सुशब्दस्य सुः पूजायामिति कर्मप्रवचनीयत्वेऽपि भवच्छब्दात्कर्तृतृतीया न तु कर्मप्रवचनीयद्वितीया । अन्तरङ्गन्यायलब्धोऽयमर्थः ॥ १०६ ॥

अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥

प्रधानाप्रधानन्यायलब्धोऽयमर्थः । तथाहि समुदायस्य सर्वानुग्राहित्वेन प्राधान्यं तेनावयवाश्रितात् समुदायाश्रितं कार्यं भवति । तेन दीधीवेवीटाम् [१, १, ६] इत्यत्र दीधीङ्वेवीङोर्ग्रहणं न तु दीङ् क्षये धीङ् अनादरे वेञ् तन्तुसन्ताने वी गत्यादावित्येषामिति । ननु कथं प्रत्येकग्रहणशङ्का यावता प्रत्येकं ग्रहणे दीङ्वेञोर्ग्रहणमनर्थकं तत्र गुणाभावात्प्रतिषेधोऽनर्थकः । तथा चेज्विषयस्य दीङो मीनातिमिनोतिदीङां ल्यपि च [६, १, ५०] इत्यात्वे कृते तथा वेञश्च स्वभावादेवेश् सम्भवति । उच्यते । द्वयोरप्येतयोर्यतोद्यति [७, ४, ४०] इतीत्वे च कृते देयं चेयमित्यत्र गुणप्रतिषेधः संभवति । ननु तथापि वेञो ग्रहणमसङ्गतं वीग्रहणेनैव लब्धे एतस्यापि वेञो गुण प्रतिषेधः सिध्यति । न सिध्यति लाक्षणिकत्वादस्य । न्यासकारस्तत्रोक्तवान् । यदि दीङादीनां ग्रहणमभिमतं स्यात्तदाऽसन्देहार्थं वीवेधीदीटामिति विन्यासं कुर्यात् । एवं चैतत्परिभाषाप्रयोजनं न दृश्यते । सर्वत्रैवासंदिग्धकरणादेवापेक्षितसिद्धेः ॥ १०७ ॥

गामादाग्रहणेष्वविशेषः ॥ १०८ ॥

तेन घुमागादि [६, ४, ६६] सूत्रे गाग्रहणेन गै शब्दे गा स्तुतौ गाङ् गिटि [२, ४, ४९] गौ च संश्चङोः [६, १, ३१] इति

गाङ् गताविति गृह्यन्ते। अत्रैव च घुमाग्रहणेन मा माने माङ् माने मेङ् प्रणिदाने इति। दाग्रहणेन च दाधा घ्वदाविति डुदाञ् दाने देङ् रक्षणे दो अवखण्डने दाण् दाने इति। यद्येवं गापोष्टक् [३, २, ८] इत्यत्राप्यनया गाङो ग्रहणं प्राप्नोति। गा स्तुताविति अयं तु छान्दसत्वान्निराकृतो रक्षितेन। तथा ह्वावामश्च [३, २, २] इत्यत्रापि मा मान इत्यस्य, तथा दाधा घ्वदाविति अत्रापि दाप्रयतेर्दाशब्दस्य ग्रहणं ततश्च प्रनिदाप्रयतीत्यत्र नेर्गदनद [८, ४, १७] इत्यादिना णत्वं स्यात्। उच्यते। गापोष्टक् [३, २, ८] इत्यत्र परस्मैपदिना पिबतिना साहचर्याद्गायतेरेव ग्रहणम्। साहचर्यपरिभाषा चानया न बाध्यते। न चैवं घ्वादिसूत्रेऽपि साहचर्यपरिभाषया गायतेरेव ग्रहणमाशङ्कनीयम्। गाङ्कुटादि [१, २, १] सूत्रे गाङ्ग्रहणात्। तद्ध्यध्यगीष्टेत्यत्र ङित्त्वार्थं क्रियते। तच्चापीत्त्वार्थम्। ह्वावामश्च [३, २, २] इत्यत्रापि सानुबन्धकह्वेञ्साहचर्यान्माङ्मेङोः सानुबन्धयोरेव ग्रहणं न निरनुबन्धकस्य मा मान इत्यस्य। लुग्विकरणपरिभाषाऽप्यनया न बाध्यते। घुमास्थागापा [६, ४, ६६] सूत्रे मतान्तरेण लुग्विकरणपरिभाषाबाधोऽपि न्यास उक्तः। दाधा घ्वदाप् [१, १, २०] इत्यत्रापि दाग्रहणेनार्थवत्परिभाषया दाप्रयतेर्दाशब्दस्याग्रहणम्। अर्थवत्परिभाषाऽप्यनया न बाध्यते। यद्येवं प्रणिदापयतीत्यत्र निरर्थकत्वाद् घुसंज्ञा न स्यात्। अनागमकानां सागमका आदेशा भवन्तीति सागमकस्यार्थवत्त्वम्। उच्यते। आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इत्याश्रयणीयम्। इयं च परिभाषा निरनुबन्धकलुग्विकरणलक्षणपरि-

भाषाणामपवादिका । लक्ष्यवशान्न क चिदित्याहुः । निरनुबन्धकलक्षणपरिभाषयोरित्यन्ये । लक्षणपरिभाषाया इत्यपरे । तच्च निरनुबन्धलक्षणपरिभाषयोर्बाधे युक्तिमपि के चिदाहुः । गामादाग्रहणे या परिभाषाऽस्ति सैवानया बाधितव्या । तद्ग्रहणे चान्तरङ्गत्वान्निरनुबन्धकपरिभाषा विद्यते लक्षणपरिभाषा च । न तु लुग्विकरणसाहचर्यपरिभाषे च । बहिरङ्गत्वात् । अर्थवत्परिभाषाऽपि बहिरङ्गैव । अर्थवत्ताया लौकिकवैदिकप्रयोगादधिगमात् । तदेवं निरनुबन्धकलाक्षणिकग्रहणविचारे कार्यकाले संज्ञापरिभाषे इत्यत्र पक्षे तुल्यत्वात्सामान्येन द्वयोरपि निरनुबन्धकलाक्षणिकपरिभाषयोर्बाधां करोति गामादाग्रहणेष्वविशेष इति । न चैवं देवदत्तहन्तृहतन्यायेन गामादाऽग्रहणम्, निरनुबन्धकलाक्षणिकपरिभाषाबाधे नास्ति लुग्विकरणपरिभाषेति वाच्यम् । शास्त्रबाधानभ्युपगमात् । गाङ्कुटादि- [१, २, १] सूत्रस्थगाङो ङकारप्रत्याख्यानकाले यथोद्देशपक्षमाश्रित्य परत्वाल्लक्षणपरिभाषां बाधित्वा निरनुबन्धकपरिभाषया कै गै शब्द इत्यस्यैव ग्रहणं स्यादित्युक्तं न्यासकारेण । यथोद्देशपक्षे हि सामान्यग्रहणं नास्ति । परत्वान्निरनुबन्धकपरिभाषाया बलवत्वात् । ये तु प्रत्ययविधिविषयां निरनुबन्धकपरिभाषामाहुस्तन्मतेन लक्षणपरिभाषैव बाध्यत इति । अस्यां च परिभाषायां गामादा गृह्यन्ते यस्मिन्नित्याश्रयणेनान्यस्यापि सामान्यग्रहणमाहुः । तेन दाधा घ्वदाप् [१, १, २०] इत्यत्र धाग्रहणेऽपि सामान्यग्रहणेन धेटोऽपि ग्रहणं भवति । अनया दाधा घ्वदाप् [१, १, २०] इत्यत्र दाग्रहणेन मीनातिमिनोति-

दीर्ङ् ल्यपि च [६, १, ५०] इत्यात्वे कृते दीङो यद्ग्रहणं प्राप्नोति तत्प्रयोजनाभावान्न भवति । तथा ह्युपसर्गे घोः किः [३, ३, ९२] इति किप्रत्ययेऽनेज्विषयत्वादात्वन्नास्ति । दो दद् घोः [७, ४, ४६] इत्यपि कर्त्तव्ये आत्वन्नास्ति ति किति तद्विधानात् । घुमास्थेति [६, ४, ६६] ईत्त्वमपि नास्ति तस्यापि कित्येव विधानात् । सनि मीमाघु [७, ४, ५४] इत्यत्रापि सनीको झल् [१, २, ९] इति कित्त्वादात्वन्नास्ति । अथाप्यस्ति तथापि दाग्रहणे तद्ग्रहणादिसादेशेन भवितव्यमेव । ननु नेर्गद [८, ४, १७] इति णत्वसम्भवात्प्रणिदातेति कथं प्रयोजनासम्भवः । उच्यते । नेर्गदादि [८, ४, १७] सूत्रे घ्वन्तस्य घुशब्दस्य परनिपातेनात्र णत्वाभावमाहुः । नन्वेवमपि लुङि सिचि एज्विषयत्वादात्वे कृते स्थाघ्वोरिच्च [१, २, १७] इति कित्वेत्वे स्यातामित्यस्ति प्रयोजनसम्भवः । ततश्चोपादास्तेति न स्यात् । तत्र भाष्ये सन्निपातलक्षणपरिभाषया परिहार उक्तः । सिचो ह्यकित्त्वादेवैज्विषयतायां सत्यामाकारेणात्मा लब्धः स यद्यात्मानं दर्शयेत्तदाऽकित्त्वस्योच्छेदः स्यात् । तस्मादकित्त्वविधानाय न यतत इत्यात्मानमपह्नुत इति ॥ १०८ ॥

**सामान्यस्यातिदेशे विशेषस्यानतिदेशः ॥ १०९ ॥**

तद्यथा । गाङ्कुटादिभ्य [१, २, १] इत्यादौ कुटादिभ्यः परस्य ङित्सामान्यस्य यत्कार्यं तत्र क्ङिति च [१, १, ५] इतिगुणप्रतिषेधादीकोऽतिदिश्यते, न तद्विशेषस्य यङादेर्यत्कार्यं द्विर्वचनादिकं तदतिदिश्यते ॥

लोकसिद्ध एवायमर्थः । तथाहि । लोके ब्राह्मणवदस्मिन् क्षत्रि-

ये प्रवर्त्तितव्यमित्युक्ते ब्राह्मणसामान्यकार्यं वन्दनादिकमतिदिश्यते न तु माठरादिविशेषसम्बद्धं परिवेषणादिकम्। क्व चिद्विशेषोऽप्यतिदिश्यते। तत्र स्थानिवदादेशोऽनल्विधौ [१, १, ५६] इति विधिग्रहणं लिङ्गम्। तत्र ह्युच्यते। अनल इति सम्बन्धसामान्ये षष्ठी क्रियताम्, अत एवाल्आश्रयो विधिर्व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वे षत्वप्राप्तिः, तथाऽल एव स्थाने विधिर्युकाम इत्यत्रोत्त्वस्य स्थानिवत्त्वाद्धलि लोपः, तथाऽल उत्तरो यो विधिर्द्यौरित्याद्यौत्त्वस्य स्थानिवत्त्वाद्धलः सुलोपः, तथाऽलि परतो यो विधिः स इष्टवानित्यत्र सम्प्रसारणस्य स्थानिवत्त्वादेतत्तदोः सुलोप [६, १, १३२] इति सुलोपः, स सर्वोऽल्विधिरित्यनल इत्युच्यमाने इदं चार्थचतुष्टयं लभ्यत एव तत्किं विधिग्रहणेन। इदं तर्हि प्रयोजनमलाश्रयो विधिरल्विधिरित्युत्तरपदलोपी समासो यथा स्यादिति, तेनानल्विधाविति प्रतिषेधः सामान्याश्रयं विशेषाश्रयं च कार्यं यावत्स्थानिवदित्यतिदेशात्प्राप्नोति तन्निरासार्थं क्रियते। तेन प्रतिदीव्येत्यत्र क्त्वागोचरवलादित्वाश्रयेडिनषेधो भवति। अन्यथा सामान्यस्यातिदेशे विशेषस्यानतिदेश इति यदेव प्रत्ययत्वाद्यार्द्धधातुकसामान्याश्रयं तदेवातिदेशेन स्यान्न वलादिविशेषाश्रयमपीति प्रतिदीव्येति वलादित्वाभावादिड् नास्तीति किं विधिग्रहणेन। ज्ञापकस्य च फलमग्रहीदित्यत्र ग्रहोऽलिटिदीर्घस्य स्थानिवत्त्वातिदेशादिड्रूपत्वेनेट ईटि [८, २, २८] इति सिचो लोपसिद्धिः ॥ १०९ ॥

श्रुतानुमितयोः श्रौतः संबन्धो बलीयान् ॥ ११० ॥

तेनाचो रहाभ्यां द्वे [८, ४, ४८] इत्यत्र रहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन यरन्तर्भावादनुमितं कार्यित्वं बाध्यते। तेन मद्रह्रद इत्यत्र रेफस्य द्वित्वं न भवति। यदि स्यात्। द्वयो रेफयोः श्रवणं स्यात्। रो रि [८, ३, १४] इत्येकस्य लोपो भविष्यतीति चेत्। न। लोपे कर्त्तव्ये पूर्वत्रासिद्धमित्यसिद्धत्वात्। हलो यमां यमि लोप [८, ४, ६४] इत्यनेन तर्ह्येकस्य लोपो भविष्यति। सिद्धं ह्येतस्मिन् द्विर्वचनं लोपे। एवमपि पक्षे द्वयो रेफयोः श्रवणं स्यात्। तत्र झि झयो होऽन्यतरस्याम् [८, ४, ६२] इत्यतोऽन्यतरस्याङ्ग्रहणमनुवर्त्तते। जातिपक्षाश्रयणाद्विहानचि च [८, ४, ४७] इति रेफे हकारस्य द्विर्वचनं न भवति॥

अयं च लौकिकन्यायलब्धोऽर्थः। तथा च पठन्ति साक्षाच्छिष्टेनानुमितं बाध्यते। प्रत्यक्षानुमितयोः प्रत्यक्षं बलीय इति। एतदेव कुतः। अनुमानात्प्रत्यक्षमन्तरङ्गं प्रत्यक्षपूर्वकत्वादनुमानस्य। यथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामित्येकं वाक्यं ब्राह्मणभोक्तृकस्य माठरकौण्डिन्यपरिवेष्टृकस्य विधायकम्। तदेकत्वाद्वाक्यस्य न बाध्यबाधकभावः। अथ द्वे एते वाक्ये तदाऽनुमितस्य भोजनस्य बाधनेन विना परिवेषणं नोपपद्यते। ततो वाक्यसामर्थ्यादिह बाधा। मद्रह्रद इत्यादौ तु हकारात्परस्य रेफस्य सम्भवत्येव द्वित्वम्। एवं तर्हि सामान्यश्रुतिं विशेषश्रुतिर्बाधत इति। यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति तक्रदानेन दधिदानं बाध्यत इति। यत्तु श्रीपुरुषोत्तमदेवेन व्याख्यातम्। ज्ञापकं चात्र ग्रामह्रदोत्तरपदात् [४, २, १४२] इति ग्रामह्रदादेर्द्विर्वचनाकरणमिति।

तन्न । हलो यमां यमि लोप [८, ४, ६४] इति रेफलोपसंभवात् सर्वत्र शाकल्यस्य [८, ४, ५१] इति प्रतिषेधाच्च ॥ ११० ॥

## चित्स्वराच्चित्स्वरो बलीयान् ॥ १११ ॥

तेनाम्बष्ठ्या सौवीर्येत्यत्र चित्स्वरमनुदात्तं बाधित्वा चित्त्वादन्तोदात्त एव भवति ॥

अयं चार्थश्चाप्प्रत्ययान्तरकरणात् सिद्धः । तथाहि । यद्यत्र चित्स्वरः स्यादजाद्यतष्टाप् [४, १, ४] इत्यनन्तरं यङस्चेति कृत्वा टापमेव विदध्यात् । तस्मात्प्रत्ययान्तरकरणं चित्स्वरार्थमेवेति । अनुदात्तौ सुप्पितौ [३, १, ४] इत्यत्र त्वनुन्यासकारेणोक्तम, इदं सूत्रं तास्यनुदात्तेत् [६, १, १८६] इत्यस्यानन्तरं कस्मान्न क्रियते, एवं हि द्विरनुदात्तग्रहणं कर्त्तव्यन्न भवति, अस्त्येतत्, इदं तु प्रयोजनम्, चित्स्वराच्चित्स्वरो बलीयान् यथा स्यात्, यङश्चाप् [४, १, ७४] इत्यत्र प्रत्ययोत्पत्तिसमकालभावी चित्स्वरो भवति सूत्रपाठाच्च पूर्वः, चित्स्वरस्यापि पश्चाद्भवन् सतिशिष्टस्वरो भवति, सूत्रपाठाच्च पर इति तस्य बलीयस्त्वम्, अन्यथा विपर्ययः स्यादिति ॥ १११ ॥

## विधिनियमसम्भवे विधिरेव ज्यायान् ॥ ११२ ॥

तेन क्त्वावामश्च [३, २, २] इत्यत्र सोपसर्गादण् सिद्ध एभ्य एव सोपसर्गेभ्यो नान्येभ्य इति नियमो न भवति । तथाऽऽतोऽटि नित्यम् [८, ३, ३] इत्ययं नित्यग्रहणं स्पष्टार्थमुक्तमुपपद्यते । अन्यथाऽसति नित्यग्रहणेऽत्रानुनासिकः पूर्वस्य तु वा [८, ३, २] इति विकल्पे सिद्धे आत एवाट्यस्त्येवात इति वा नियमः स्यात् ॥

अयं चान्तरङ्गन्यायसिद्धोऽर्थः। तथाहि। नियमपक्षेऽश्रुतस्य प्रतिषेधवाक्यस्य द्वितीयस्य कल्पनायां गौरवं भवति। तथा च श्लिष आलिङ्गन [३, १, ४६] इत्यत्रानुन्यासः। तत्र तस्माद्विधेरेव ज्यायस्त्वं नियमात्, स्थितम्। नियमः परिसंख्यास्मिन् शास्त्रे त्रिदोषिका मता। श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिकेति। नियमज्ञापकयोर्मिथोविरोधे द्वयोरप्यर्थद्वयावलम्बित्वेन तुल्यत्वान्न तत्र बलाबलम्। अत एव प्रत्यय [३, १, १,] सूत्रे न्यासकारेणेच एकाचोऽम्प्रत्ययवच्च [६, ३, ६८] इत्यादिव्याख्यानप्रस्तावे प्रत्ययग्रहणं ज्ञापकमुक्त्वा नियमार्थमाशङ्कितम्। तथा ङ्याप् [४, १, १] सूत्रे नौद्व्यचष्ठन् [४, ४, ७] इत्यत्र प्रस्तावे नौग्रहणं ज्ञापकमुक्त्वा नियमार्थमुक्तमिति ॥ ११२ ॥

प्रतिपदविधानाद्योगविभागो गरीयान् ॥ ११३ ॥

तेन जभोऽचि रधेश्च नेट्यलिटीति सूत्रत्रयेण सिद्धौ किमर्थं द्वौ रधिग्रहणमिति न पूर्वपक्षणीयमिति। गरीयस्त्वं च योगविभागस्य यौक्तमेव। तथाह्येकयोगे ग्रन्थगौरवेऽप्येकैव वाक्यार्थप्रतीतिरुदेति भिन्नयोगे प्रतियोगं भिन्नबुद्ध्युदयाद्युक्तं प्रतिपत्तिगौरवमिति ॥ ११३ ॥

सर्वविधिभ्यो लोपविधिर्बलवान् ॥ ११४ ॥

तेन कानिसन्तीत्यत्र यणादेशात्पूर्वं श्नसोरल्लोपः सिध्यति। ज्ञापकं चास्याः प्रत्ययलोपे प्रत्ययलक्षणम् [१, १, ६२] इति सूत्रम्। यदीदं न स्यात्तदा लोपात् प्रागेव प्रत्ययकार्यं कृत्वा पश्चात्प्रत्ययलोपादिष्टसिद्धौ सूत्रमिदमनर्थकं स्यादिति। भाष्ये त्वियं

नोपगता प्रयोजनाभावात् ॥ ११४ ॥

अनन्त्यविकारेऽन्त्यसदेशस्य ॥ ११५ ॥

अनन्त्यस्य यो विकारः सोऽन्त्यसदेशस्यान्तसमीपवर्त्तिनः स्थाने भवति । सदेशस्येति निपातनात्समानस्य सभावः । तेन न्यमार्ट्, मिमार्जिषतीत्यत्र मृजेर्वृद्धिः [७, ३, ११४] अड़ागमाभ्यासेकारयोर्न भवति । तथा अट्टणा तट्टणेत्यत्राल्लोपोऽन [६, ४, १२४] इत्यादेरकारस्य लोपो न भवति । विदुष इति वसोः संप्रसारणम् [६, ४, १३१] इति च वदवकारस्य न भवति ॥

इयं च परिभाषा भाष्ये ष्यङः संप्रसारणम् । [६, १, १३] इत्यत्र पठिता । तत्रैव चैषाऽतिप्रसङ्गदोषभयात् प्रत्याख्याता । तथाह्यस्यां सत्यां धात्वादेः षः सः [६, १, ६४] इति णो नः [६, १, ६५] इति चेहैव स्यात् सोता नोतेति, इह तु न स्यात् सिञ्चति नमतीति । तथा तदोः सः सावनन्त्ययोः [७, २, १०६] इतीहैव स्यात्तदः स इति, इह तु न स्यात् त्यदः स्य इति । अन्यानि च बहूनि दूषणानि सन्ति । उक्तप्रयोजनानि च प्रकारान्तरेण साधितानि । तदुक्तं न्यमार्डित्यत्राकारस्य वृद्धिर्न भवति, इक्परिभाषयेक एव वृद्धिर्भविष्यति । मिमार्जिषतीत्यत्रापि वृद्धौ कृतायामभ्यासह्रस्वत्वं भविष्यतीति । अट्टणा तट्टणेत्यत्रापि न दूषणम्, अल्लोपोऽन [६, ४, १३४] इत्यनाऽकारं विशेषयिष्यामः, अनो योऽकार इति । नन्वेवमप्यनसे मनस इत्यत्रापि प्राप्नोति । उच्यते । अन्कारेणाङ्गं विशेषयिष्यामः, अन्कारान्तस्याङ्गस्यानो योऽकार इति । एवमप्यनस्तक्ष्णा मनस्तक्ष्णेत्यत्रापि प्राप्नोति । एवं तर्हि कार्यकालं संज्ञापरिभाषमिति यत्र कार्यं तत्र

इष्टव्यम्, भस्येत्यत्रोपस्थितमिदं भवति, यचि भम् [१, ४, १८] इति तत्र यजादिपरतयाऽनकारं विशेषयिष्यामः, यजादिपरस्या-न्कारस्यानो योऽकार इत्यादि बहु व्याख्यानम् । किं तु प्रत्ये-कं बहुव्याख्यानाद् वचनमेव सधीय इति परिभाषाश्रयणम् । दृश्यते चानया व्यवहारः । अदसोऽद्रेः पृथग् मुत्वं केचिदिच्छन्ति लत्ववत् । केचिदन्त्यसदेशस्येति । अतिप्रसङ्गस्य नाशङ्कनीयो लक्ष्यानुरोधेन परिभाषाश्रयणात्, उदात्तनिर्देशाद्वा । यत्रैषा परिभाषेष्यते । तत्रोदात्तनिर्देशः कर्त्तव्यः । तदुक्तम् । उदा-त्तनिर्देशात्सिद्धमिति । अस्यां च परिभाषायामत उपधाया [७, २, ११६] इत्युपधाग्रहणं चिन्त्यम् ॥ ११५ ॥

नानर्थकेऽलोन्त्यविधिः ॥ ११६ ॥

इयं परिभाषा भाष्ये नोक्ता, तत्प्रयोजनस्य प्रकारान्तरेण सिद्धत्वात् । तथाह्यस्याः प्रयोजनम् अव्यक्तानुकरणस्यात इतौ [६, १, ९८] इत्यत्राच्छब्दस्य पररूपे, तथा हलि लोप [७, २, ११३] इतीदूपलोपे, तथा ष्वमोरेद्वावभ्यासलोपश्च [६, ४, ११९] इत्यभ्यासलोपे, अत्र लोपोऽभ्यासस्य [७, ४, ५८] इत्यभ्यासलोपे चान्त्यविज्ञानं मा भूदिति । तत्र यथाक्रमं नाम्रेडितस्यान्त्यस्य तु वा [६, १, ९९] इति ज्ञापकात्, अनादेशे कृतेऽन्त्यनकारलोपा-द्, द्विशकारनिर्देशेन लोपस्य शित्त्वात्, अत्रग्रहणस्य सर्वादे-शार्थत्वात् सर्वादेशविज्ञानं सिद्धमिति किमनया । अत एव तस्य लोप [१, ३, ९] इत्यत्र तस्यग्रहणं सर्वलोपार्थं कृतं सूत्रकारेण । ये चाप्येतामभ्युपगच्छन्ति तेऽप्यनभ्यासविकारेष्विति शेषमस्याः पठन्ति । तेनाजीगणदित्यत्रे च गण [७, ४, ९७] इत्यतोऽन्त्यस्ये-

कारः स्यात् ॥ ११६ ॥

प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् ॥ ११७ ॥

यद्यप्यस्याः परिभाषाया अस्तित्वे प्रमाणन्नास्ति, तथाप्यङ्गस्य [६, ४, १] इत्यत्र भाष्यकारेण व्याख्यातेयम्। कैयटेनापि नामि [६, ४, ३] इत्यत्र पठिता। अत एवास्याः प्रामाण्यं न्यासकारादिभिरङ्गीक्रियते। यत्त्वपृक्त एकालप्रत्यय [१, २, ४१] इत्यत्रानुन्यासकारेण व्याख्यातमिह प्रत्ययग्रहणात्प्रत्ययाप्रत्ययपरिभाषा नास्ति। तन्न। प्रत्ययग्रहणं विस्पष्टार्थमिति तत्र न्यासे साक्षादेव व्याख्यातत्वात्। अविस्पष्टत्वं च स्वरूपविधिविषये भिसित्यादावस्याः प्रवृत्तिर्न्याय्या न त्वस्वरूपविधिविषय इति। स्वाङ्गे तस्प्रत्यये कृभ्वोः [३, ४, ६१] इत्यत्र तु स्वरूपग्रहणे प्रत्ययग्रहणं प्रत्ययपरिभाषाया अभावे प्रमाणमेव ॥

प्रयोजनं चास्याः सनाशंसभिक्ष उः [३, २, १६८] इत्यत्र प्रत्ययग्रहणम। न चार्थवत्परिभाषया व्यवस्था। प्रत्ययाप्रत्यययोरुभयोरप्यर्थवत्त्वात्। एतदपि प्रयोजनं केषां चिन् मतेन। तथाहि। सनाशंस [३, २, १६८] इत्यत्र प्रत्ययग्रहणे गर्गादिषु जिगीषुशब्दपाठो ज्ञापको न्यासकारेण प्रागेव व्याख्यातो न तु प्रत्ययपरिभाषया। तथा वल [६, ४ १८] इत्यत्रोपसर्गस्य घञ्यमनुष्ये बहुलम् [६, ३, १२२] इत्यत्र बहुलग्रणात् प्रत्ययग्रहणमुक्तम्। अन्यस्तु मतौ बह्वचोऽनजिरादीनाम् [६, ३, ११९] इति क्रतुम्राहचर्याद्वलप्रत्ययस्यैव ग्रहणमाह। ननु वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् [६, ३, ११६] इति पूर्वभूतेन वनगिर्योः साहचर्येण वलप्रातिपदिकग्रहणमाशङ्कनीयम्। यतः शब्दपर-

विप्रतिषेधेन मतुपैव साहचर्यं न्याय्यम्। मतौ [६, ३, ११९] इत्यत्रेदं नाम्नङ्गीयं प्रातिपदिक एव मताविति। उकारस्यानुनासिकविशिष्टस्योपादानान्मतुपैवायं निर्देशः, वनगिर्योः संज्ञायाम् [६, ३, ११६] इत्यतः संज्ञायां ग्रहणानुवृत्तेर्वा। न च मतिशब्देन संज्ञा गम्यते। वनो र च [४, १, ७] इत्यत्रानया न प्रयोजनम्, वन षन संभक्तौ वनु याचन इत्येताभ्यां विच्प्रत्ययादर्शनात्॥ ११७॥

## सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्॥ ११८॥

तेन गुपूधूपविच्छिपणिपनिभ्य आय [३, १, २८] इत्यत्र स्तुत्यर्थेन पनिना साहचर्यात् पणेः स्तुत्यर्थस्यैव ग्रहणम्। तथा पञ्चम्यपाङ्परिभिः [२, ३, १०] इत्यत्राङा व्यवधानेऽप्यपेन साहचर्यात् परेर्वर्जनार्थस्य ग्रहणम्। यत्र पूर्वेणापि साहचर्यं परेणापि तत्र शब्दपरविप्रतिषेधे परेणैव साहचर्यम्। यथा सत्सूद्विषादि- [३, २, ६१] सूत्रे द्विषा साहचर्यात् षूङ् प्राणिप्रसवे इत्यस्यादादिकस्य ग्रहणं न त्वनादादिकेन सदिना साहचर्यादनादादिकस्य सूधातोः॥

लौकिक एवायं न्यायः। तदुक्तं कर्मप्रवचनीया [१, ४, ८३] इत्यत्र भाष्ये। लोके हि गोर्द्वितीयेनार्थ इत्युक्ते गौरेव द्वितीय उपादीयते साहचर्यान्नाश्वो न वा गर्दभ इति। अनित्या चेयम्। तस्यानित्यत्वं द्विस्त्रिश्चतुरिति कृत्वोऽर्थे [८, ३, ४३] इत्यत्र न्यासकारेण कृत्वोर्थग्रहणाच्चतुरो विशेषणाद् विज्ञापितम्। यदीयं नित्या स्याद् द्विस्त्रिःशब्दयोः सुचप्रत्ययान्ततया तत्साह-

चर्यात् कृत्वोऽर्थवृत्तेरेव ग्रहणं सिद्धं चतुरोऽपीति किं कृत्वोऽर्थ-ग्रहणेन। अनित्यत्वे चास्य दीधीवेवीटाम् [१, १, ६] इत्यत्र दीधीवेव्योः साहचर्यादिट किट गतावित्यस्य धातोर्ग्रहणं न भवति, आगमस्य तु भवति। ननु धातोरग्रहणेऽपि कथमागमस्य ग्रहणं यावताऽर्थवत्परिभाषया प्रत्ययपरिभाषया वा पचे इत्यत्राह् गुणप्रतिषेधार्थं प्रत्ययस्यैव ग्रहणं युक्तम्, अत एव दीधीवेवीटाम [१, १, ६] इत्यत्र न्यासकृताऽल्पाच्तरस्येटोऽपूर्वनिपातेनागमस्येटो ग्रहणमुक्तं न त्वेतत्परिभाषाया अनित्यत्वेन। उच्यते। एवं मन्यते, अर्थवत्परिभाषाऽनित्या, आनि लोट [८,४, १६] इत्यत्र लोड्ग्रहणात्, प्रत्ययपरिभाषा शास्त्र एव नास्ति। ननु तथापि सामान्यग्रहणं युक्तम्। न युक्तम्। प्रत्ययग्रहणे केवलस्येटो गुणाभावात् पच इत्यत्र स्याद् गुणो लट्प्रत्ययाश्रय एवेति॥ ११८॥

यथोद्देशं संज्ञापरिभाषम्॥ ११९॥

कार्यकालं संज्ञापरिभाषम्॥ १२०॥

संज्ञापरिभाषमिति समाहारद्वन्द्वः। संज्ञा परिभाषा च यत्रोपदिष्टा तत्रैव व्याप्रियते। तथा चोच्यते। परिभाषा पुनरेकदेशस्थैव सकलशास्त्रमभिज्वलयतीति। अपर आह। यत्र कार्यं तत्र व्याप्रियते तादर्थ्यात्। तथा चोच्यते। यत्रयत्र गुणवृद्धी श्रूयेते तत्रतत्रैकपरिभाषोपतिष्ठत इति। व्युत्पन्नाव्युत्पन्नप्रतिपत्तृभेदादेतौ यथोद्देशकार्यकालपक्षौ। यथेष्टञ्च भाष्यकारेणानयोः परिभाषयोस्तत्रतत्र समाश्रयणादेव प्रामाण्यम्। तथाहि। यथोद्देशपक्षमाश्रित्याह्नन्तुद इत्यत्र पूर्वत्रासिद्धम्। [८, २, १]

इत्यनेनासिद्धं बहिरङ्गमन्तरङ्गे इति पूर्वस्मिन् परिभाषाकार्ये कर्त्तव्ये परस्य संयोगान्तलोपस्यासिद्धत्वम् तेनान्तरङ्गाभावादसिद्धं बहिरङ्गमन्तरङ्गे इति न प्रवर्त्तते, तेन संयोगान्तलोपः सिध्यति। अन्ये तु यथोद्देशं संज्ञापरिभाषमित्यस्मिन्पक्षे जीवताङ्गवानित्यत्र परत्वेन ङिच्च [१, १, ५३] इत्यस्मादनेकाल्शित्सर्वस्य [१, १, ५५] इति सर्वादेशस्तातङ्माह्नः। तत्तु न शोभनम्। यतस्तातङो ङित्करणं गुणवृद्धिप्रतिषेधार्थम्, सर्वादेशत्वे हि ङित्करणमनर्थकं स्यात्, एरुः [३, ४, ८६] इत्यस्यानन्तरं तिह्योस्तातङाशिष्यन्यतरस्यामित्येवमस्तस्य सिद्धत्वात्। तथा च भाष्यम्। एरुप्रकरण एव क्रियातिह्योस्तातङाशिष्यन्यतरस्यामिति। नन्वेरुप्रकरणे तिह्योस्तादिति कृते विदेः शतुर्वसुः [७, १, ३६] इत्यनेन नित्यवसुरादेशः स्यात्। न। शास्त्रादिगणे विदन्निति पाठाद्विकल्पेन वसुर्भविष्यति। नन्वेवमपि जीवतात्त्वमित्यत्र परत्वात्तादादेशेनातो हेः [६, ४, १०५] इति लुगभावो युक्तः। नैतत्। पूर्वविप्रतिषेधेन लुकं बाधित्वा तादादेशविधानात्। कार्यकालपक्षमाश्रित्य नार्कूशो नाप्पत्यमित्यत्रासिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया खरवसानयोर्विसर्जनीयो न भवति। तदुक्तम्। न वा बहिरङ्गत्वादिति। तथा झलो झलि [८, २, २६] ह्रस्वादङ्गात् [८, २, २७] इत्यादौ सप्तमीपञ्चमीनिर्देशानां तस्मिन्निति निर्दिष्टे पूर्वस्य [१, १, ६६] इत्यादिपरिभाषास्तु कर्तव्यास्वसिद्धत्वाभावो दर्शित इति ॥ १२० ॥

## गणकार्यमनित्यम् ॥ १२१ ॥

तेन अतः शीङ्स्यादिप्रभृतिभ्यः शप [२, ४, ७२] इति शब्लु-

कोऽभावान्न विश्वसेत् पूर्वविरोधिनस्य मण्डपे शयामि किमतः परमित्यादि सिध्यति। शयामीत्यात्मनेपदानित्यत्वेन परस्मैपदम्। तच्चात्मनेपदानित्यत्वं फणादौ। भ्राजृ भ्राशृ दीप्ताविति पठित्वा पुनरेजृ भ्रेजृ भ्राजृ दीप्ताविष्यत्र भ्राजतेः पाठात्को चिदाह्ः। कथं कृत्वा। उच्यते। द्विरात्मनेपदिषु पाठो नित्यमात्मनेपदार्थमेव । एवं च तदुपपद्यते यदि क चिदात्मनेपदिनोऽपि परस्मैपदभाजो भवन्ति। अन्ये तु राजसाहचर्याद्राजृसहचरितस्यैव भ्राजतेर्ग्रहणं न त्वेजृ भ्रेजृ भ्राजृ दीप्ताविति, तेन क्विपि भ्राक् क्तिनि भ्राक्तिरिति द्विष्पाठप्रयोजनं वदन्ति। तेषां चक्षिङोऽनुबन्धद्वयमात्मनेपदानित्यत्वे ज्ञापकम् ॥

गणकार्यानित्यत्वे तु ज्ञापकं श्वमूष सहन इत्यस्य घटादित्वादेव षित्त्वे सिद्धे षित्करणम्। न च षित्त्वं षिद्गौरादिभ्यश्च [४, १, ४१] इति ङीषर्थं स्यात्, यथा धेटष्टित्त्वं स्तनंधयीति ङीबर्थम्। आगमेः क्षमायामित्यत्र क्षमायामिति निर्देशात् ॥ १२१ ॥

## संदेहे बहुवचनं प्रयोक्तव्यम् ॥ १२२ ॥

यथा कति भवतः पुत्रा इति। युक्तमेवेदं व्याप्तिन्यायेन बहुवचननिर्देशेन सर्ववचनानामनुग्रहात् ॥ १२२ ॥

## अर्थाद्विभक्तिविपरिणामः ॥ १२३ ॥

लोकसिद्ध एवायमर्थः। तथाह्युच्चानि गृहाण्यस्य देवदत्तस्य आमन्त्रयस्वैनमिति षष्ठीं द्वितीयया परिणम्य एनं देवदत्तमिति संबध्यते । तथा शास्त्रेऽपि यथाऽऽङो नाऽस्त्रियाम [७, ३, १२०] इत्यत्र घेरिति षष्ठ्यन्तमनुवर्त्तमानमर्थादेव पर्यालोच्य पञ्चम्यन्ततया विपरिणम्यते। तेनायमर्थो भवति घेरुत्तरस्याङो ना-

भाव इति । एतस्या एव प्रपञ्चमाहुः । अभिधेयवल्लिङ्गवचनानि भवन्तीति ॥ १२३ ॥

## योगविभागादिष्टसिद्धिः ॥ १२४ ॥

तेनेदोण्या [१, २, ५०] इत्यत्र इदिति योगविभागेन पञ्चसूचिरित्येव नान्यः । युक्तं चैतत् । तथाहि । यदीदिति सूत्रं सर्वविषयं स्यात् तदा गोण्या इति द्वितीयं वचनमनर्थकं स्यात् । ननु प्रथममिदिति सूत्रं सामर्थ्याद्विकल्पार्थं भविष्यति ततश्च गोण्या इति नित्यार्थं स्यादिति कथमनर्थकम् । उच्यते । एकयोगविषयविशेषणानां योगद्वये प्रतीतिः सर्वयोगविभागेषु । तेन यथैकस्मिन्योगे विभाषाशङ्का नास्ति । न योगद्वयेऽपीति ॥ १२४ ॥

## पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते ॥ १२५ ॥

तेनापो वेति वक्तव्ये आपोऽन्यतरस्याम् [७, ४, १५] इति किमर्थमिति न पूर्वपक्षणीयम् । वैचित्र्यफलमेतत् पर्यायशब्दानामिति । यद्येवं कथं कर्तृस्थे चाशरीरे कर्मणि [१, ३, ३७] इत्यत्र लाघवार्थं कायशब्दे कर्तव्ये शरीरग्रहणं शरीरैकदेशग्रहणार्थमिति शरीरग्रहणस्य ज्ञापकत्वमुक्तं न्यासकृता, तथा कर्णे लक्षणा [६, ३, ११५] इत्यादौ सूत्रे चिन्हग्रहणे कर्त्तव्ये यल्लक्षणग्रहणं कृतं तल्लक्षणविशेषग्रहार्थं न्यासकृतोक्तम्, कथं वाऽनभिहित [२, ३, १] सूत्रेऽनुन्यासकृता लाघवार्थमनुक्त इति कर्त्तव्ये यदनभिहित इत्युच्यते तेनाभिमुख्येन नैरन्तर्येण यत्प्रतिपादितं तत्रायं प्रतिषेध इत्युक्तम् । उच्यते । यत्र ज्ञाप्यन्न विद्यते तत्र वैचित्र्यार्थमुच्यते । यत्र तु ज्ञाप्यं विद्यते तत्र नोच्यते वैचित्र्यार्थमिति ॥ १२५ ॥

अगत्या हि खलु परिभाषाश्चाश्रीयन्ते ॥ १२६ ॥

इदमपि वचनं युक्तमेव । परिभाषा हि नाम न साक्षात्पाणिनीयवचनानि किं तर्हि नानाचार्याणाम् । तत्र पाणिनीये शब्दानुशासने यत्रैव क्वचिद्दिष्टविषये मुख्यलक्षणेन सिद्धिस्तत्रैवैता गत्यन्तरमपश्यद्भिराश्रीयन्ते । यत्र त्वेतत्समाश्रयणे दोष एव प्रसज्यते तत्र नाश्रीयन्त एव । एतेन परिभाषाश्रयणेन नानिष्टासञ्जनं कर्त्तव्यमित्युक्तं भवति ॥ १२६ ॥

व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते ॥ १२७ ॥

जातिपक्षसमाश्रयणस्यायमर्थः पठ्यते । जातौ हि पदार्थे सकृदेव लक्षणं प्रवर्त्तते भावाभावौ च विकल्पस्तत्र लक्ष्ये जातिमाश्रित्यैकत्र लक्ष्ये भावः सर्वत्र कृतो भवति । जातेरेकत्वात् । एतावतैव च विकल्पस्य चरितार्थत्वात् । विशिष्टविषयेऽवस्थिताभावाविकल्पे व्यवस्थितविभाषेत्युच्यते । तेनाचि विभाषा [८, २, २१] इति लत्वं प्राप्यङ्गे नित्यमेव विधीयते गल इति, विषे तु न विधीयते एव गर इति । जातिव्यक्तिपक्षौ चाचार्येण यथेष्टमाश्रितावेव । तत्र जातेराश्रयणे जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् [१, २, ५८] इतिसूत्रं लिङ्गम् । व्यक्तेराश्रयणे सरूपाणामेकशेष एकविभक्ताविति सूत्रम् ॥ १२७ ॥

अनिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ॥ १२८ ॥

तेनावेः को यावादिभ्यः कन् [५, ४, २९] इत्येवमादीनामपि प्रत्ययसंज्ञा भवति । तथाहि । त्रिविधाऽर्थवत्ता लौकिकी, अन्वयव्यतिरेकसमधिगम्या, प्रतिज्ञाप्रापिता च । तत्र लौकिकी तावत्पद एव नास्ति किं पुनस्तदेकदेशस्य, प्रकृत्यैव निवृत्त्यैव श-

न्द्रो लोकेऽर्थवान् भवति वाक्य एव प्रवृत्तिनिवृत्ती दृष्टे इति तस्यैव लौकिकी । अन्वयव्यतिरेकसमधिगम्या यथा ण्वुला-दीनां कर्त्रादिः । प्रतिज्ञाप्रापिता यथा किवादीनां कर्त्रादिः, न ह्यसावन्वयव्यतिरेकसमधिगम्या किबादीनां व्यतिरेक एव नान्वयः श्रवणाभावात् । तदेवं प्रतिज्ञाप्रापितार्थवत्ता या तत्फलमेवानिर्दिष्टार्थाः प्रत्यया इति यस्मात्तैरप्यर्थं प्रतिय-न्तीति तेऽपि प्रत्यया एव । अत्राहुः । ननु यथाऽनिर्दिष्टा-र्था इत्यनेन कन्नादीनां प्रत्ययत्वम् । तथा विकारागमयोरपि स्यात् । ततश्च ऋनस्त [७, ३, ३२] इत्यनेन ऋन इति षष्ठीनिर्दे-शादन्त्यनिवृत्तिपूर्वको मल्लद्दत्येत्यत्र प्रत्ययत्वात्तकारो विका-रः प्रकृतेः परः स्याद्यथा भ्रस्जो रोपधयो रमन्यतरस्याम् [६, ४, ४७] इत्यत्र रोपधनिवृत्तिपूर्वको रमागम इति । उच्यते । अनेन हि वचनेन यावादिभ्यः प्रातिपदिकेभ्यः पृथग्भूतानाम-नवयवानामेव कन्नादीनां स्वार्थिकत्वं प्रतिज्ञायते । तथाहि । यावक इत्यादावुत्पन्नेऽपि कनि प्रकृतिः स्वार्थिकैव तदेवं यत्र प्रकृतिः पृथगर्थमाह तत्रैव नष्टपितृधनन्यायेन विधातव्यस्याप्य-र्थवत्त्वम्, विकारागमयोस्तु प्रवृत्तयोः प्रकृतेः पृथग् नार्थवत्त्वं सविकारागमाया एव प्रकृतेरर्थवत्त्वात् । यद्येवं गुप्तिज्किद्भ्यः सन् [३, १, ५] इत्यत्र सनः प्रत्ययत्वं न स्याद् गुपादिषु निन्दादेः स्वार्थस्याप्रतीतेः । उच्यते । गुपादीनां निन्दादयः स्वार्था विद्यन्त एव । यत्तूक्तं गुपादिषु निन्दादेः स्वार्थस्याऽप्रतीतेरिति । तस्या-यमभिप्रायः । धातोरनेकार्थत्वे कुतोऽवगम्यते प्रकृतेर्निन्दादिः सना द्योत्यत इति न पुनर्गोपनादिरपीति सोऽपि हि प्रकृते-

रेवार्थः । अत एवान्वयव्यतिरेकाभ्यां सनो निन्दादयोऽर्था गुप्तिज्किद्भ्यः सन् [३, १, ५] इत्यत्र न्यासकारेणोक्ताः । तत्रायमाशयः । अन्वयव्यतिरेकाभ्यां निन्दादिद्योतन एव सनः सामर्थ्यदर्शनं न पुनरन्वयव्यतिरेकाभ्यामपूर्व एवार्थः सनाऽभिधीयते । तस्य स्वार्थिकत्वात् स्वार्थिकत्वं तु धातोः कर्मण इत्यत्र न्यासेन व्याख्यातमिति ॥ १२८ ॥

ज्ञापकसिद्धं न सर्वत्र ॥ १२९ ॥

उचितमेवैतत् । ज्ञापकन्नाम न बाधकमपि तु निमित्तेन सूचकं तच्च क्व चिदेवेष्टसिद्धौ व्याप्रियते न सर्वत्रेति युज्यते ज्ञापकसिद्धं न सर्वत्रेति । तेन ज्ञापकसिद्धमात्मनेपदानित्यत्वादि न सर्वत्र प्रयोक्तव्यं किं तु क्वचिदेव शिष्टप्रयोगदर्शनात् ॥ १२९ ॥

युगपदधिकरणवचनो द्वन्द्वः ॥ १३० ॥

एकदैकैकानां स्वार्थानामभिधाने द्वन्द्वो भवतीत्यर्थः । तेनाङ्गस्य वाङ्गस्य सोह्यस्येत्यङ्गवङ्गसुह्मा इत्यत्र तद्राजान्तस्य बहुत्वात् तद्राजस्य बहुषु तेनैवास्त्रियाम् [२, ४, ६२] इति लुक् सिद्ध्यति । तथा देवदत्तयज्ञदत्तौ पचत इत्यत्रैककालमेव क्रियाकारकसम्बन्धः अतो द्विवचनान्त एव क्रियाभ्यामभिसम्बध्यते वाक्ये तु देवदत्तः पचति यज्ञदत्तश्चेति साधनयोः क्रियासम्बन्धः प्रत्येकं क्रमवार्यो भवति । अत एव पचतीत्येकवचनान्तमेव प्रयुज्यते। ननु यथा द्वन्द्वे युगपदर्थाभिधानं तथा वाक्येऽपि प्राप्नोति, वाक्यसमासयोरेकार्थत्वात्। एवं च वृक्षौ वृक्षौ चेति वाक्येन भवितव्यमिति केषां चिन्मतम्। एतत्तु पापीयः प्रतिभासते। न

हि वाक्ये पदस्यास्ति शक्तिः सर्वार्थबोधने इति। यद्येवं वृत्तिसमानार्थता वाक्यस्य न स्यात्। न। समुच्चयात्माभिधायकत्वेन साधनसाधर्म्यात् प्रवृत्तिसमानार्थता भविष्यति वाक्यस्य। ननु यदि द्वन्द्वे पदानामेकार्थता तदा धवखदिरपलाशा इत्यत्र सरूपाणामेकशेषः स्यात्, विरूपाणामपि समानार्थानामेकशेषो भवत्येव यथा वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डाविति, न चैकशेषे सति द्वन्द्वस्यानर्थक्यम्, तस्यैकार्थमस्मादनेनैकशेषप्रयोजनवत्त्वस्य विद्यमानत्वात्, यं विधं प्रत्युपदेशोऽनर्थकस्स विधिर्बाध्यते यस्य तु विधेः स एव निमित्तं नासौ बाध्यते । उच्यते । द्वन्द्वपदानामेकार्थता सन्निधान एव न पुनस्तदभावेऽपीति । भवति हि पदान्तरसन्निधाने पदानामर्थविशेषे वृत्तिर्यथा गौर्वाहीकः सिंहो माणवक इति । तदेवं यद्येकशेषः स्यात्तदा धवा इत्यत्र धवार्थमात्रं प्रतीयेत न खदिरपलाशावपीति अतो नैकशेषप्रसङ्गः । तदेवं द्वन्द्व एकदेव प्रत्येकं सर्वार्थप्रतीतिरिति स्थितम् । तथा चोक्तम् । सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोः । क्रमेणार्थप्रतीतौ तु न स्याद् द्विवचनादिकमिति । यत एव द्वन्द्वपदानामेकार्थत्वमत एव द्वन्द्वात्परो यः श्रूयते लभतेऽसौ प्रत्येकमभिसम्बन्धमित्युच्यते । तथाहि । यद्येकतरेण सह सम्बन्धस्तदा परेण सम्बन्धोऽर्थवशादेव लब्धस्तस्य सर्वार्थाभिधायकत्वात् । यद्येवं गाङ्कुटादि [१, २, १] सूत्रेऽपि प्रत्येकमादिशब्दसम्बन्धाद्गाङादिः कुटादिः स्यात् । उच्यते । गाङ्कुटादिभ्य [१, २, १] इति बहुव्रीहिगर्भो द्वन्द्वो न तु द्वन्द्वगर्भो बहुव्रीहिः । अन्यथा ङित्त्वादातो लोप इटि च [६, ४, ६४] इत्याकारलोपेन गण संख्या-

न इति निर्देशो नोपपद्येत। न च वाच्यं ख्यातेस्तद्रूपम्। संपूर्वस्य ख्यातेः प्रयोगाभावोऽनभिधानात् । एतच्च समि ख्यः [३, २, ७] इत्यत्र न्यासकारेणोक्तम् । ननु ल्युटि परतः ख्याञादेशेन न भवितव्यमसनयोश्चेति प्रतिषेधात्। नैतत्। संज्ञायां तु उच्यते यथा विचक्षणा इति। अथ वा वेला छन्दसीति कुरुनादिगणे पठन्ति तद्बहुव्रीहिगर्भे द्वन्द्वे प्रमाणम्। तद्धि रूपमजेर्वीभावेनेति। यस्त्वाह। प्रत्यासत्त्यादिशब्दस्य कुटशब्देनैव सम्बन्ध इति तेन ग्रन्थेन बहुव्रीहिगर्भो द्वन्द्व एव लक्षयितव्यः। एवं च लोमादिपामादि [५, २, १००] सूत्रे प्रत्येकमादिग्रहणं स्पष्टार्थमिति। यस्त्वाह नात्र द्वन्द्वगर्भो बहुव्रीहिरन्यथा लघ्वक्षरं पूर्वं निपततीति कुटः पूर्वनिपातः स्यादिति। तदयुक्तम्। समानाश्रि तत्प्रवर्त्तनात् कुशकाशमिति यथा, इह तु कुट शब्देऽकार उच्चारणार्थोऽस्ति ॥ १३० ॥

पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ॥ १३१ ॥

तेन धातूपसर्गस्यात्र दर्शने बहिरङ्गत्वेन सुटोऽसिद्धत्वात्संस्कृषीष्ट समस्कृतेत्यत्र ऋतश्च संयोगादेः [७, २, ४३] इतीण्न भवति। तथा संस्क्रियत इत्यत्र ऋतश्च संयोगादेर्गुणः [७, ४, १०] इति गुणो न भवति। नन्वस्मिन्दर्शने समचिस्करदित्यत्र एयन्तात्लुङि चङि सुटोऽसिद्धत्वाद्दीर्घो लघोः [७, ४, ९४] इति प्राप्नोति। यदि दीर्घत्वन्नेष्यते तदा प्रतिविधेयं क्रियासाधनयोर्निमित्तनिमित्तभावेन सम्बन्धस्यान्तरङ्गत्वात्पूर्वं धातुः साधनेन युज्यत इतीदमेव दर्शनमिति केचिदाहुः। अन्ये त्वभ्यासव्यवायेपीति वचनादमुमर्थमाहुः। ननु चेङ्कोरधिपूर्वयोरेवाध्ययन-

स्मरणवृत्तित्वात्केवलयोरनर्थकयोः पूर्वं साधनसम्बन्धोऽशक्यः कर्त्तुम्। तथा प्रतिष्ठत इत्यत्रादौ साधनसम्बन्धे स्थितिक्रियायाः कर्त्ता प्रतीयते पश्चादुपसर्गसम्बन्धाद्गतिरिति। तथा तिष्ठति गच्छतीति विरुद्धमर्थद्वयं क्रमभावि प्रतीयेत। तथा अनुभूयते कम्बलो देवदत्तेनोपास्यते गुरुरित्यत्र भवत्यासोरकर्मकत्वाद् भावे लकारः स्यात्। पश्चादुपसर्गेण सम्बन्धे सति सकर्मकतायां कर्मणि द्वितीया स्यात्। यदा तु पूर्वं धातुरुपसर्गेण युज्यते तदा सोपसर्गस्य सकर्मकत्वे कर्मण्येव लकारो भवति अभिहितत्वात्कर्मणो नास्ति द्वितीयाप्रसङ्गः। उच्यते। आद्यं तावददूषणम्। यस्मादिङिकावेवाध्ययनस्मरणयोरभिधायकावधेस्तु द्योतकत्वं द्योतकत्वेनैव निपातानामभ्युपगमात्। अवश्यं चैतत्। अन्यथा यदि धातोरनर्थकत्वं स्यात्तदा धातुसंज्ञैव न स्यात् क्रियाया अभावात्। अथानयोरस्तु गणे पाठाद्धातुत्वमेवमपि कर्त्रादौ कारके लकारो न स्यात्। अथास्त्वन्धकुक्कुटवदनर्थकादेव धातोः कर्त्रादिकारकमात्रे प्रत्ययः, एवमपि धातोरनर्थकत्वे तिङन्तमपि तदन्वितमनर्थकं स्यात्। किं च धातोरनर्थकत्वे पूर्वक्रमेण धात्वादेः क्त्वाप्रत्ययान्तस्यानर्थकत्वात्समर्थपरिभाषयाऽधीत्येत्यत्र समासो न स्यात्। तस्माद्धातुरेवाध्ययनस्मरणयोरपि, धातावुपसर्गास्तु द्योतकाः। अर्थवत्सूत्रे यदेतयोरानर्थक्यमुक्तं न्यासकृता तत्रायं भावः। सत्यपि धातोरानर्थक्येऽध्यादिप्रयोगेऽर्थवत्ता भविष्यति यथा स्फटिकस्य जपाकुसुमसन्निधौ लौहित्यमिति, एवं प्रतिष्ठत इत्यत्रापि धातुरेव गमनमात्र प्रप्रब्दस्तु द्योतकः, तथाऽनुभूयते कम्बलो दे-

वदत्तेनेत्यत्रापि भवतिरेवानुभवने ज्ञानविशेषे वर्त्तते स चानु-
शब्देन द्योत्यत इत्यभ्युपगन्तव्यम् । तस्य च ज्ञानविशेषस्याभि-
धायी भवति सकर्मको भवतिः ॥ १३१ ॥

**अन्ये तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्**
**साधनेनेत्याहुः ॥ १३२ ॥**

तेन नेर्विश [१, ३, १७] इत्यत्रात्मनेपदनियम उपपद्यते ।
अन्यथादौ साधनसम्बन्धे शेषत्वेन परस्मैपदप्रसङ्गादघटमानः
स्यात् । तद्दर्शने चानुभूयते कम्बलो देवदत्तेनेत्यादि निरवद्यम् ।
संस्कृषीष्ट इत्यत्र लिङागमाभावः सुटोऽभक्तत्वादुपदेशाधिका-
राद्धोपदेशे संयोगादिमतो धातोर्ग्रहणात्, संस्क्रियत इत्यत्रा-
पि नित्यं छन्दसि [७, ४, ८] इत्यतो नित्यग्रहणानुवृत्तेर्नि-
त्यसंयोगादेर्ग्रहणात् प्रतिपदोक्तसंयोगादिग्रहणाच्च ऋतश्च
संयोगादेः [७, ४, १०] इत्यस्याभावः । अयं चार्थो न्यायसिद्धः ।
तथाहि । क्रिययोपसर्गसम्बन्धतादात्म्येन क्रियासाधनयोर्हि नि-
मित्तनिमित्तिभावेन उपसर्गेण हि क्रियामभ्युपदिश्य सम्बध्यत
इति निमित्तिनिमित्तभावस्सम्बन्धोऽन्तरङ्ग इति धातूपसर्गयोः
सम्बन्धोऽन्तरङ्ग इति ॥ १३२ ॥

**समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र**
**रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्यः ॥ १३३ ॥**

समासकृत्तद्धितेषूत्पन्नो भावप्रत्ययः सम्बन्धमाह । यथा नी-
लोत्पलत्वं कारकत्वं दण्डित्वमिति । रूढ्यभिन्नरूपाव्यभिचरि-
तसम्बधेभ्यस्तु न भवति सम्बन्धाभिधानम् । रूढिर्यथा तैलपा-
यिकात्वमिति केचित् । गमित्वमित्यादौ समासादुत्पन्नो भाव-

प्रत्ययः क्रियासम्बन्धं नाभिदधाति किं तर्हि जातिम् । अभि-
सरूपं यथा पूरणाद्भागे तीयादन् [५, ३, ४८] इति तृतीय इत्य-
त्र हि भावप्रत्ययार्थो न सम्बन्धः । अव्यभिचरितसम्बन्धो यथा
महच्छब्दः, अयं शतकृत्वः सत्स्वपि पदार्थेषु न सम्बन्धं व्यभिच-
रतीति तदुत्पन्नो भावप्रत्ययः सामान्यमभिदधाति तत्रेति ॥

महोपाध्यायश्रीसीरदेवकृता परिभाषावृत्तिः
समाप्ता ॥

॥ शुभमस्तु ॥

॥ श्रीः ॥

# परिभाषावृत्तेः शोधनपत्त्रम्।

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
| --- | --- | --- | --- |
| अणदित् | अणुदित् | १ | १५ |
| अचश्वेति | अचश्च[१, २,२८] इति | २ | ६ |
| अचश्चेति | अचश्च [१, २, २८] इति | २ | १० |
| चेत्यने | च [२, २, १४] इत्यने | ४ | १० |
| चेत्यने | च [२, २, १४] इत्यने | ४ | १३ |
| चिकीर्षा-रवे | चिकीर्षा रवे | ६ | ३ |
| ङित्वात् | ङित्त्वात् | ७ | ३ |
| तत्रचै | तत्र चै | ११ | १२ |
| कृत्स्नआ | कृत्स्न आ | १२ | १ |
| न्वमि | न्वनमि | १२ | २२ |
| मित्वा | मित्त्वा | १२ | २३ |
| मतत् | मेतत् | १४ | १ |
| तोभिस | तो भिस | १४ | १९ |
| हृड | ह ड | १६ | १७ |
| नोर | नो र | १८ | ३ |

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
| --- | --- | --- | --- |
| धाध्व | धा ध्व | १९ | ६ |
| था हि | थाहि | १९ | ९ |
| डित्वा | डित्त्वा | २२ | ११ |
| ईह | ई ह | २३ | १६ |
| ब्री:हि | ब्रीहि | २४ | २२ |
| ऋटग | ऋट ग | २७ | ९ |
| हृङ् | दृङ् | २८ | ४ |
| षोक: | षो क: | २९ | ७ |
| जह्वे | जग्ले | २९ | २३ |
| वत्वा | वत्त्वा | ३० | २१ |
| क्तिन् प्र | क्तिन्प्र | ३१ | १ |
| वस | व स | ३२ | ८ |
| सत्रे | सूत्रे | ४० | १७ |
| माभू | मा भू | ४७ | २२ |
| ष्टी | ष्ठी | ४८ | २३ |
| नचै | न चै | ५१ | ११ |
| पिवि | पि वि | ५१ | १९ |
| छद्गह | छद्ग्रह | ५३ | ८ |
| माभू | मा भू | ५४ | ७ |
| पिप्य | पिप्प | ५४ | २० |

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| गह | ग्रह | ५४ | २३ |
| पौघः | पौ घः | ५५ | १२ |
| माभू | मा भू | ५५ | १८ |
| ह्वित | ह्वित | ६० | ८ |
| प्रजोन | प्रयोजन | ६० | २२ |
| ग्रव्द | ग्रब्द | ६१ | १२ |
| तथा। | ।तथा | ६६ | ३ |
| घउ | घ उ | ७३ | १६ |
| ञ्घ | घञ् | ८० | २१ |
| काय | कार्य | ८१ | १० |
| त | तु | ८१ | १६ |
| नन | मनु | ८२ | २३ |
| प्रदश | प्रदर्श | ८५ | ९ |
| सङ्ग्रह | संग्रह | ८५ | १७ |
| धाछ्व | धा छ्व | ८६ | ९ |
| धाछ्व | धा छ्व | ८७ | ८ |
| नीति | नि [ १, १, २७ ] इ | ८७ | १४ |
| सूत्र | सूत्रे | ८८ | १३ |
| न्द्रस्यसू | न्द्रस्यसू | ८८ | २१ |
| कत्तति | कर्त्तीति | ८९ | ५ |
| यवति | युवति | ८९ | ११ |
| पूवस्य | पूर्वस्य | ९० | १ |
| पिलाद् | पिल्वाद् | ९१ | १७ |

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| डिंलम् | डिंत्त्वम् | १०० | ११ |
| मा त | माऽत | १०० | १४ |
| दिस | दिसु | १०८ | २३ |
| त्या | स्या | १०९ | ३ |
| हवु | हुवु | ११२ | ७ |
| माभू | मा भू | ११३ | ३ |
| चोय | चो य | ११४ | ५ |
| उन्न | उन्नू | ११७ | ४ |
| माभू | मा भू | ११९ | ३ |
| तेन। | ।तेन | ११९ | १९ |
| माभू | मा भू | १२० | २ |
| तग् | तुग् | ११० | १५ |
| माभू | मा भू | १२२ | २२ |
| माभू | मा भू | १२५ | १५ |
| ानीस्य | स्यानी | १२५ | १९ |
| माभू | मा भू | १३४ | ६ |
| पिभ | पि भ | १३४ | १४ |
| माभू | मा भू | १३५ | ८ |
| द्यक्त | द्युक्त | १४१ | १४ |
| माभू | मा भू | १४१ | २३ |
| गणा | गुणा | १४१ | २३ |
| माभू | मा भू | १४२ | ११ |
| रफा | रेफा | १४४ | २३ |
| न त | न तु | १४५ | २२ |

| अशुद्धस्य | शोधनम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| त्तैत | त्तैते | १४६ | १२ |
| काष | कार्ष | १४८ | १ |
| पंव | पुंव | १४९ | २३ |
| त्यिन्ये | त्यन्ये | १५० | ८ |
| स्वघ | स्व घ | १५१ | ६ |
| भ्रीति | भ्रीरिति | १५१ | ६ |
| हत्ते | हत्तेः | १५२ | १ |
| वत्वा | वत्त्वा | १५५ | १३ |
| त्येक | त्येक् | १५७ | १ |
| स्त | स्तु | १६४ | १६ |
| थाचो | था चो | १६८ | १६ |
| मिति | म् [१,४, ९४] इति | १७० | २ |
| ष प्र | षप्र | १७० | १६ |
| इत्य | इत्यु | १७४ | ११ |
| टिद्दी | टि द्दी | १७४ | २० |
| तिम्रि | ति म्रि | १७६ | १५ |
| मात्, | मात् | १७७ | ४ |
| सज्ञा | संज्ञा | १८१ | ३ |
| यां ग्र | यांग्र | १८१ | ५ |
| पन | पुन | १८७ | २३ |